महामेघप्रभां श्यामां तथैव च दिगम्बराम्।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्चिताम्॥ १९॥

कर्णावतंसतानीतशवयुग्मभयानकाम्।
घोरदंष्ट्रकरालास्यां पीनोन्नतपयोधराम्॥ २०॥

शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम्।
सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम्॥ २१॥

दन्तुरां दक्षिणव्यापिमुक्तलम्बकचोच्चयाम्।
शवरूपमहादेवहृदयोपरि संस्थिताम्॥ २२॥
शिवाभिर्घोररूपाभिश्चतुर्दिक्षु समन्विताम्।
सुखप्रसन्नवदनां स्मेराननसरोरुहाम्।
सदा सञ्चिन्तये देवीं श्मशानालयवासिनीम्॥ २३॥

लं पृथिव्यात्मिकायै गन्धं समर्पयामि। हं आकाशात्मिकायै पुष्पाणि समर्पयामि। यं वाय्वात्मिकायै धूपं आघ्रापयामि। रं अग्न्यात्मिकायै दीपं समर्पयामि। वं अमृतात्मिकायै अमृतोपहारं समर्पयामि।

ओं क्रीं काली क्रूं कराली च कल्याणी कमला कला।
कलावती कलाढ्या च कलापूज्या कलात्मिका॥ १॥

कलाहृष्टा कलापुष्टा कलामस्ता कलाधरा।
कलाकोटिसमाभासा कलाकोटिप्रपूजिता॥ २॥

कलाकर्मकलाधारा कलापारा कलागमा।
कलाधारा कमलिनी ककारा करुणा कविः॥ ३॥

ककारवर्णसर्वाङ्गी कलाकोटिप्रभूषिता।
ककारकोटिगुणिता ककारकोटिभूषणा॥ ४॥

ककारवर्णहृदया ककारमनुमण्डिता।
ककारवर्णनिलया ककशब्दपरायणा॥ ५॥

ककारवर्णमुकुटा ककारवर्णभूषणा।
ककारवर्णरूपा च काकशब्दपरायणा॥ ६॥

कवीरास्फालनरता कमलाकरपूजिता।
कमलाकरनाथा च कमलाकररूपधृक्॥ ७॥

कमलाकरसिद्धिस्था कमलाकरपारदा।
कमलाकरमध्यस्था कमलाकरतोषिता॥ ८॥

कथङ्कारपरालापा कथङ्कारपरायणा।
कथङ्कारपदान्तस्था कथङ्कारपदार्थभूः॥ ९॥

कमलाक्षी कमलजा कमलाक्षप्रपूजिता।
कमलाक्षवरोद्युक्ता ककारा कर्बुराक्षरा॥ १०॥

करतारा करच्छिन्ना करश्यामा करार्णवा।
करपूज्या कररता करदा करपूजिता॥ ११॥

करतोया करामर्षा कर्मनाशा करप्रिया।
करप्राणा करकजा करका करकान्तरा॥ १२॥

करकाचलरूपा च करकाचलशोभिनी।
करकाचलपुत्री च करकाचलतोषिता॥ १३॥

करकाचलगेहस्था करकाचलरक्षिणी।
करकाचलसम्मान्या करकाचलकारिणी॥ १४॥

करकाचलवर्षाढ्या करकाचलरञ्जिता।
करकाचलकान्तारा करकाचलमालिनी॥ १५॥

करकाचलभोज्या च करकाचलरूपिणी।
करामलकसंस्था च करामलकसिद्धिदा॥ १६॥

करामलकसम्पूज्या करामलकतारिणी।
करामलककाली च करामलकरोचिनी॥ १७॥

करामलकमाता च करामलकसेविनी।
करामलकवद्ध्येया करामलकदायिनी॥ १८॥

कञ्जनेत्रा कञ्जगतिः कञ्जस्था कञ्जधारिणी।
कञ्जमालाप्रियकरी कञ्जरूपा च कञ्जजा॥ १९॥

कञ्जजातिः कञ्जगतिः कञ्जहोमपरायणा।
कञ्जमण्डलमध्यस्था कञ्जाभरणभूषिता॥ २०॥

कञ्जसम्माननिरता कञ्जोत्पत्तिपरायणा।
कञ्जराशिसमाकारा कञ्जारण्यनिवासिनी॥ २१॥

करञ्जवृक्षमध्यस्था करञ्जवृक्षवासिनी।
करञ्जफलभूषाढ्या करञ्जारण्यवासिनी॥ २२॥

करञ्जमालाभरणा करवालपरायणा।
करवालप्रहृष्टात्मा करवालप्रियागतिः॥ २३॥

करवालप्रियाकन्था करवालविहारिणी।
करवालमयी कर्मा करवालप्रियङ्करी॥ २४॥

कबन्धमालाभरणा कबन्धराशिमध्यगा।
कबन्धकूटसंस्थाना कबन्धानन्तभूषणा॥ २५॥

कबन्धनादसंतुष्टा कबन्धासन्नधारिणी।
कबन्धगृहमध्यस्था कबन्धवनवासिनी॥ २६॥

कबन्धकाञ्ची करणी कबन्धराशिभूषणा।
कबन्धमालाजयदा कबन्धदेहवासिनी॥ २७॥

कबन्धासनमान्या च कपालमाल्यधारिणी।
कपालमालामध्यस्था कपालव्रततोषिता॥ २८॥

कपालदीपसन्तुष्टा कपालदीपरूपिणी।
कपालदीपवरदा कपालकज्जलस्थिता॥ २९॥

कपालमालाजयदा कपालजपतोषिणी ।
कपालसिद्धिसंहृष्टा कपालभोजनोद्यता ॥ ३० ॥

कपालव्रतसंस्थाना कपालकमलालया ।
कवित्वामृतसारा च कवित्वामृतसागरा ॥ ३१ ॥

कवित्वसिद्धिसंहृष्टा कवित्वादानकारिणी ।
कविपूज्या कविगतिः कविरूपा कविप्रिया ॥ ३२ ॥

कविब्रह्मानन्दरूपा कवित्वव्रततोषिता ।
कविमानससंस्थाना कविवाञ्छाप्रपूरिणी ॥ ३३ ॥

कविकण्ठस्थिता कंह्रींकंकंकविपूर्तिदा ।
कज्जला कज्जलादानमानसा कज्जलप्रिया ॥ ३४ ॥

कपालकज्जलसमा कज्जलेशप्रपूजिता ।
कज्जलार्णवमध्यस्था कज्जलानन्दरूपिणी ॥ ३५ ॥

कज्जलप्रियसन्तुष्टा कज्जलप्रियतोषिणी ।
कपालमालाभरणा कपालकरभूषणा ॥ ३६ ॥

कपालकरभूषाढ्या कपालचक्रमण्डिता ।
कपालकोटिनिलया कपालदुर्गकारिणी ॥ ३७ ॥

कपालगिरिसंस्थाना कपालचक्रवासिनी ।
कपालपात्रसन्तुष्टा कपालार्घ्यपरायणा ॥ ३८ ॥

कपालार्घ्यप्रियप्राणा कपालार्घ्यवरप्रदा ।
कपालचक्ररूपा च कपालरूपमात्रगा ॥ ३९ ॥

कदली कदलीरूपा कदलीवनवासिनी ।
कदलीपुष्पसम्प्रीता कदलीफलमानसा ॥ ४० ॥

कदलीहोमसन्तुष्टा कदलीदर्शनोद्यता ।
कदलीगर्भमध्यस्था कदलीवनसुन्दरी ॥ ४१ ॥

कदम्बपुष्पनिलया कदम्बवनमध्यगा ।
कदम्बकुसुमामोदा कदम्बवनतोषिणी ॥ ४२ ॥

कदम्बपुष्पसम्पूज्या कदम्बपुष्पहोमदा ।
कदम्बपुष्पमध्यस्था कदम्बफलभोजिनी ॥ ४३ ॥

कदम्बकाननांतःस्था कदम्बाचलवासिनी ।
कक्षपा कक्षपाराध्या कच्छपासनसंस्थिता ॥ ४४ ॥

कर्णपूरा कर्णनासा कर्णाढ्या कालभैरवी ।
कलप्रीता कलहदा कलहा कलहातुरा ॥ ४५ ॥

कर्णयक्षी कर्णवार्ताकथिनी कर्णसुन्दरी ।
कर्णपिशाचिनी कर्णमञ्जरी कविकक्षदा ॥ ४६ ॥

कविकक्षविरूपाढ्या कविकक्षस्वरूपिणी ।
कस्तूरीमृगसंस्थाना कस्तूरीमृगरूपिणी ॥ ४७ ॥

कस्तूरीमृगसन्तोषा कस्तूरीमृगमध्यगा ।
कस्तूरीरसनीलाङ्गी कस्तूरीगन्धतोषिता ॥ ४८ ॥

कस्तूरीपूजकप्राणा कस्तूरीपूजकप्रिया ।
कस्तूरीप्रेमसन्तुष्टा कस्तूरीप्राणधारिणी ॥ ४९ ॥

कस्तूरीपूजकानन्दा कस्तूरीगन्धरूपिणी ।
कस्तूरीमालिकारूपा कस्तूरीभोजनप्रिया ॥ ५० ॥

कस्तूरीतिलकानन्दा कस्तूरीतिलकप्रिया ।
कस्तूरीहोमसन्तुष्टा कस्तूरीतर्पणोद्यता ॥ ५१ ॥

कस्तूरीमार्जनोद्युक्ता कस्तूरीचक्रपूजिता ।
कस्तूरीपुष्पसम्पूज्या कस्तूरीचर्वणोद्यता ॥ ५२ ॥

कस्तूरीगर्भमध्यस्था कस्तूरीवस्त्रधारिणी ।
कस्तूरिकामोदरता कस्तूरीवनवासिनी ॥ ५३ ॥

कस्तूरीवनसंरक्षा कस्तूरीप्रेमधारिणी ।
कस्तूरीशक्तिनिलया कस्तूरीशक्तिकुण्डगा ॥ ५४ ॥

कस्तूरीकुण्डसंस्नाता कस्तूरीकुण्डमज्जना ।
कस्तूरीजीव सन्तुष्टा कस्तूरीजीवधारिणी ॥ ५५ ॥

कस्तूरीपरमामोदा कस्तूरीजीवनक्षमा ।
कस्तूरीजातिभावस्था कस्तूरीगन्धचुम्बना ॥ ५६ ॥

कस्तूरीगन्धसंशोभाविराजितकपालभूः ।
कस्तूरीमदनान्तःस्था कस्तूरीमदहर्षदा ॥ ५७ ॥

कस्तूरी कवितानाढ्या कस्तूरीगृहमध्यगा ।
कस्तूरीस्पर्शकप्राणा कस्तूरीनिन्दकान्तका ॥ ५८ ॥

कस्तूर्यामोदरसिका कस्तूरीक्रीडनोद्यता ।
कस्तूरीदाननिरता कस्तूरीवरदायिनी ॥ ५९ ॥

कस्तूरीस्थापनासक्ता कस्तूरीस्थानरञ्जिनी ।
कस्तूरीकुशलप्राणा कस्तूरीस्तुतिवन्दिता ॥ ६० ॥

कस्तूरीवन्दकाराध्या कस्तूरीस्थानवासिनी ।
कहरूपा कहाढ्या च कहानन्दा कहात्मभूः ॥ ६१ ॥

कहपूज्या कहेत्याख्या कहहेया कहात्मिका ।
कहमाला कण्ठभूषा कहमन्त्रजपोद्यता ॥ ६२ ॥

कहनामस्मृतिपरा कहनामपरायणा ।
कहपारायणरता कहदेवी कहेश्वरी ॥ ६३ ॥

कहहेतुः कहानन्दा कहनादपरायणा ।
कहमाता कहान्तस्था कहमन्त्रा कहेश्वरा ॥ ६४ ॥

कहगे(ज्ञे)या कहाराध्या कहध्यानपरायणा ।
कहतन्त्रा कहकहा कहचर्यापरायणा ॥ ६५ ॥

कह्लाचारा कह्लगतिः कह्लताण्डवकारिणी।
कह्लारण्या कह्लगतिः कह्लशक्तिपरायणा॥ ६६ ॥

कह्लराज्यरता कर्मसाक्षिणी कर्मसुन्दरी।
कर्मविद्या कर्मगतिः कर्मतन्त्रपरायणा॥ ६७ ॥

कर्ममात्रा कर्मगात्रा कर्मधर्मपरायणा।
कर्म रेखानाशकर्त्री कर्म रेखाविनोदिनी॥ ६८ ॥

कर्म रेखामोहकारी कर्मकीर्तिपरायणा।
कर्मविद्या कर्मसारा कर्माधारा च कर्मभूः॥ ६९ ॥

कर्मकारी कर्महारी कर्मकौतुकसुन्दरी।
कर्मकाली कर्मतारा कर्मच्छिन्ना च कर्मदा॥ ७० ॥

कर्मचाण्डालिनी कर्मवेदमाता च कर्मभूः।
कर्मकाण्डरतानन्ता कर्मकाण्डानुमानिता॥ ७१ ॥

कर्मकाण्डपरीणाह्ला कमठी कमठाकृतिः।
कमठाराध्यहृदया कमठा कण्ठसुन्दरी॥ ७२ ॥

कमठासनसंसेव्या कमठी कर्मतत्परा।
करुणाकरकान्ता च करुणाकरवन्दिता॥ ७३ ॥

कठोरा करमाला च कठोरकुचधारिणी।
कपर्दिनी कपटिनी कठिनी कङ्कभूषणा॥ ७४ ॥

करभोरूः कठिनदा करभा करभालया।
कलभाषामयी कल्पा कल्पना कल्पदायिनी॥ ७५ ॥

कमलस्था कलामाला कमलास्या क्वणत्प्रभा।
ककुद्मिनी कष्टवती करणीयकथार्चिता॥ ७६ ॥

कचार्चिता कचतनुः कचसुन्दरधारिणी।
कठोरकुचसंलग्ना कटिसूत्रविराजिता॥ ७७ ॥

कर्णभक्षप्रिया कन्दा कथा कन्दगतिः कलिः ।
कलिघ्नी कलिदूती च कविनायकपूजिता ॥ ७८ ॥

कणकक्षानियन्त्री च कश्चित्कविवरार्चिता ।
कर्त्री च कर्तृकाभूषा करिणी कर्णशत्रुपा ॥ ७९ ॥

करणेशी करणपा कलवाचा कलानिधिः ।
कलना कलनाधारा कलना कारिका करा ॥ ८० ॥

कलगे(ज्ञे)या कर्कराशिः कर्कराशिप्रपूजिता ।
कन्याराशिः कन्यका च कन्यकाप्रियभाषिणी ॥ ८१ ॥

कन्यकादानसन्तुष्टा कन्यकादानतोषिणी ।
कन्यादानकरानन्दा कन्यादानग्र(तृगृ)हेष्टदा ॥ ८२ ॥

कर्षणा कक्षदहना कामिता कमलासना ।
करमालानन्दकर्त्री करमालाप्रतो(भू)षिता ॥ ८३ ॥

करमालाशयानन्दा करमालासमागमा ।
करमालासिद्धिदात्री करमाला करप्रिया ॥ ८४ ॥

करप्रियाकररता करदानपरायणा ।
कलानन्दा कलिगतिः कलिपूज्या कलिप्रसूः ॥ ८५ ॥

कलनादनिनादस्था कलनादवरप्रदा ।
कलनादसमाजस्था कहोला च कहोलदा ॥ ८६ ॥

कहोलगेहमध्यस्था कहोलवरदायिनी ।
कहोलकविताधारा कहोलऋषिमानिता ॥ ८७ ॥

कहोलमानसाराध्या कहोलवाक्यकारिणी ।
कर्तृरूपा कर्तृमयी कर्तृमाता च कर्त्तरी ॥ ८८ ॥

कनीया कनकाराध्या कनीनकमयी तथा ।
कनीयानन्दनिलया कनकानन्दतोषिता ॥ ८९ ॥

कनीयककरा काष्ठा कथार्णवकरी करी।
करिगम्या करिगतिः करिध्वजपरायणा ॥ ९० ॥

करिनाथप्रिया कण्ठा कथानकप्रतोषिता।
कमनीया कमनका कमनीयविभूषणा ॥ ९१ ॥

कमनीयसमाजस्था कमनीयव्रतप्रिया।
कमनीयगुणाराध्या कपिला कपिलेश्वरी ॥ ९२ ॥

कपिलाराध्यहृदया कपिलाप्रियवादिनी।
कहचक्रमन्त्रवर्णा कहचक्रप्रसूनका ॥ ९३ ॥

कएईलह्रींस्वरूपा च कएईलह्रींवरप्रदा।
कएईलह्रींसिद्धिदात्री कएईलह्रींस्वरूपिणी ॥ ९४ ॥

कएईलह्रींमन्त्रवर्णा कएईलह्रींप्रसूकला।
कवर्गा च कपाटस्था कपाटोद्घाटनक्षमा ॥ ९५ ॥

कङ्काली च कपाली च कङ्कालप्रियभाषिणी।
कङ्कालभैरवाराध्या कङ्कालमानसंस्थिता ॥ ९६ ॥

कङ्कालमोहनिरता कङ्कालमोहदायिनी।
कलुषघ्नी कलुषहा कलुषार्त्तिविनाशिनी ॥ ९७ ॥

कलिपुष्पा कलादाना कशिपुः कश्यपार्चिता।
कश्यपा कश्यपाराध्या कलिपूर्णकलेवरा ॥ ९८ ॥

कलेवरकरी काञ्ची कवर्गा च करालका।
करालभैरवाराध्या करालभैरवेश्वरी ॥ ९९ ॥

कराला कलनाधारा कपर्दीशवरप्रदा।
कपर्दीशप्रेमलता कपर्दिमालिकायुता ॥ १०० ॥

कपर्दिजपमालाढ्या करवीरप्रसूनदा।
करवीरप्रियप्राणा करवीरप्रपूजिता ॥ १०१ ॥

कर्णिकारसमाकारा कर्णिकारप्रपूजिता ।
करीषाग्निस्थिता कर्षा कर्षमात्रसुवर्णदा ॥ १०२ ॥

कलशा कलशाराध्या कषाया करिगानदा ।
कपिला कलकण्ठी च कलिकल्पलता मता ॥ १०३ ॥

कल्पमाता कल्पलता कल्पकारी च कल्पभूः ।
कर्पूरामोदरुचिरा कर्पूरामोदधारिणी ॥ १०४ ॥

कर्पूरमालाभरणा कर्पूरवासपूर्तिदा ।
कर्पूरमालाजयदा कर्पूरार्णवमध्यगा ॥ १०५ ॥

कर्पूरतर्पणरता कटकाम्बरधारिणी ।
कपटेश्वरसम्पूज्या कपटेश्वररूपिणी ॥ १०६ ॥

कटुः कपिध्वजाराध्या कलापपुष्पधारिणी ।
कलापपुष्परुचिरा कलापपुष्पपूजिता ॥ १०७ ॥

क्रकचा क्रकचाराध्या कथम्ब्रूमा करालता ।
कथङ्कारविनिर्मुक्ता काली कालक्रिया क्रतुः ॥ १०८ ॥

कामिनी कामिनीपूज्या कामिनीपुष्पधारिणी ।
कामिनीपुष्पनिलया कामिनीपुष्पपूर्णिमा ॥ १०९ ॥

कामिनीपुष्पपूजार्हा कामिनीपुष्पभूषणा ।
कामिनीपुष्पतिलका कामिनीकुण्डचुम्बना ॥ ११० ॥

कामिनीयोगसन्तुष्टा कामिनीयोगभोगदा ।
कामिनीकुण्डसम्मग्ना कामिनीकुण्डमध्यगा ॥ १११ ॥

कामिनीमानसाराध्या कामिनीमानतोषिता ।
कामिनीमानसञ्चारा कालिका कालकालिका ॥ ११२ ॥

कामा च कामदेवी च कामेशी कामसम्भवा ।
कामभावा कामरता कामार्ता काममञ्जरी ॥ ११३ ॥

काममञ्जीररणिता कामदेवप्रियान्तरा ।
कामकाली कामकला कालिका कमलार्चिता ॥ ११४ ॥

कादिका कमला काली कालानलसमप्रभा ।
कल्पान्तदहना कान्ता कान्तारप्रियवासिनी ॥ ११५ ॥

कालपूज्या कालरता कालमाता च कालिनी ।
कालवीरा कालघोरा कालसिद्धा च कालदा ॥ ११६ ॥

कालाञ्जनसमाकारा कालञ्जरनिवासिनी ।
कालऋद्धिः कालवृद्धिः कारागृहविमोचिनी ॥ ११७ ॥

कादिविद्या कादिमाता कादिस्था कादिसुन्दरी ।
काशी काञ्ची च काञ्चीशा काशीशवरदायिनी ॥ ११८ ॥

क्रीम्बीजा चैव क्रीं बीजहृदयाय नमस्स्मृता ।
काम्या काम्यगतिः काम्यसिद्धिदात्री च कामभूः ॥ ११९ ॥

कामाख्या कामरूपा च कामचाप विमोचिनी ।
कामदेवकलारामा कामदेवकलालया ॥ १२० ॥

कामरात्रिः कामदात्री कान्ताराचलवासिनी ।
कामरूपा कालगतिः कामयोगपरायणा ॥ १२१ ॥

कामसंमर्दनरता कामगेहविकाशिनी ।
कालभैरवभार्या च कालभैरवकामिनी ॥ १२२ ॥

कालभैरवयोगस्था कालभैरवभोगदा ।
कामधेनुः कामदोग्ध्री काममाता च कान्तिदा ॥ १२३ ॥

कामुका कामुकाराध्या कामुकानन्दवर्धिनी ।
कार्त्तवीर्या कार्त्तिकेया कार्त्तिकेयप्रपूजिता ॥ १२४ ॥

कार्या कारणदा कार्यकारिणी कारणान्तरा ।
कान्तिगम्या कान्तिमयी कात्या कात्यायनी च का ॥ १२५ ॥

कामसारा च काश्मीरा काश्मीराचारतत्परा।
कामरूपाचाररता कामरूपप्रियंवदा ॥ १२६ ॥

कामरूपाचारसिद्धिः कामरूपमनोमयी।
कार्त्तिकी कार्त्तिकाराध्या काञ्चनारप्रसूनभूः ॥ १२७ ॥

काञ्चनारप्रसूनाभा काञ्चनारप्रपूजिता।
काञ्चरूपा काञ्चभूमिः कांस्यपात्रप्रभोजिनी ॥ १२८ ॥

कांस्यध्वनिमयी कामसुन्दरी कामचुम्बना।
काशपुष्पप्रतीकाशा कामद्रुमसमागमा ॥ १२९ ॥

कामपुष्पा कामभूमिः कामपूज्या च कामदा।
कामदेहा कामगेहा कामबीजपरायणा ॥ १३० ॥

कामध्वजसमारूढा कामध्वजसमास्थिता।
काश्यपी काश्यपाराध्या काश्यपानन्ददायिनी ॥ १३१ ॥

कालिन्दीजलसङ्काशा कालिन्दीजलपूजिता।
कादेवपूजानिरता कादेवपरमार्थदा ॥ १३२ ॥

कार्मणा कार्मणाकारा कामकार्मणकारिणी।
कार्मणत्रोटनकरी काकिनी कारणाह्वया ॥ १३३ ॥

काव्यामृता च कालिङ्गा कालिङ्गमर्दनोद्यता।
कालागुरुविभूषाढ्या कालागुरुविभूतिदा ॥ १३४ ॥

कालागुरुसुगन्धा च कालागुरुप्रतर्पणा।
कावेरीनीरसम्प्रीता कावेरीतीरवासिनी ॥ १३५ ॥

कालचक्रभ्रमाकारा कालचक्रनिवासिनी।
कानना काननाधारा कारुः कारुणिकामयी ॥ १३६ ॥

काम्पिल्यवासिनी काष्ठा कामपत्नी च कामभूः।
कादम्बरीपानरता तथा कादम्बरी कला ॥ १३७ ॥

कामवन्द्या च कामेशी कामराजप्रपूजिता।
काम राजेश्वरीविद्या कामकौतुकसुन्दरी ॥ १३८ ॥

काम्बोजजा काञ्चिनदा कांस्यकाञ्चनकारिणी।
काञ्चनाद्रिसमाकारा काञ्चनाद्रिप्रदानदा ॥ १३९ ॥

कामकीर्त्तिः कामकेशी कारिका कान्तराश्रया।
कामभेदी च कामार्तिनाशिनी कामभूमिका ॥ १४० ॥

कालनिर्णाशिनी काव्यवनिता कामरूपिणी।
कायस्थाकामसन्दीप्तिः काव्यदा कालसुन्दरी ॥ १४१ ॥

कामेशी कारणवरा कामेशीपूजनोद्यता।
काञ्चीनूपुरभूषाढ्या कुङ्कुमाभरणान्विता ॥ १४२ ॥

कालचक्रा कालगतिः कालचक्रमनोभवा।
कुन्दमध्या कुन्दपुष्पा कुन्दपुष्पप्रिया कुजा ॥ १४३ ॥

कुजमाता कुजाराध्या कुठारवरधारिणी।
कुञ्जरस्था कुशरता कुशेशयविलोचना ॥ १४४ ॥

कुनठी कुररी कुद्रा कुरङ्गी कुटजाश्रया।
कुम्भीनसविभूषा च कुम्भीनसवधोद्यता ॥ १४५ ॥

कुम्भकर्णमनोल्लासा कुलचूडामणिः कुला।
कुलालगृहकन्या च कुलचूडामणिप्रिया ॥

कुलपूज्या कुलाराध्या कुलपूजापरायणा।
कुलभूषा तथा कुक्षिः कुररीगणसेविता ॥ १४७ ॥

कुलपुष्पा कुलरता कुलपुष्पपरायणा।
कुलवस्त्रा कुलाराध्या कुलकुण्डसमप्रभा ॥ १४८ ॥

कुलकुण्डसमोल्लासा कुण्डपुष्प परायणा।
कुण्डपुष्पप्रसन्नास्या कुण्डगोलोद्भवात्मिका ॥ १४९ ॥

कुण्डगोलोद्भवाधारा कुण्डगोलमयी कुहूः ।
कुण्डगोलप्रियप्राणा कुण्डगोलप्रपूजिता ॥ १५० ॥

कुण्डगोलमनोल्लासा कुण्डगोलबलप्रदा ।
कुण्डदेवरता क्रुद्धा कुलसिद्धिकरा परा ॥ १५१ ॥

कुलकुण्डसमाकारा कुलकुण्डसमानभूः ।
कुण्डसिद्धिः कुण्डऋद्धिः कुमारीपूजनोद्यता ॥ १५२ ॥

कुमारीपूजकप्राणा कुमारीपूजकालया ।
कुमारी कामसन्तुष्टा कुमारीपूजनोत्सुका ॥ १५३ ॥

कुमारीव्रतसन्तुष्टा कुमारीरूपधारिणी ।
कुमारीभोजनप्रीता कुमारी च कुमारदा ॥ १५४ ॥

कुमारमाता कुलदा कुलयोनिः कुलेश्वरी ।
कुललिङ्गा कुलानन्दा कुलरम्या कुतर्कधृक् ॥ १५५ ॥

कुन्ती च कुलकान्ता च कुलमार्गपरायणा ।
कुल्ला च कुरुकुल्ला च कुल्लुका कुलकामदा ॥ १५६ ॥

कुलिशाङ्गी कुब्जिका च कुब्जिकानन्दवर्धिनी ।
कुलीना कुञ्जरगतिः कुञ्जरेश्वरगामिनी ॥ १५७ ॥

कुलपाली कुलवती तथैव कुलदीपिका ।
कुलयोगेश्वरी कुण्डा कुङ्कुमारुणविग्रहा ॥ १५८ ॥

कुङ्कुमानन्दसन्तोषा कुङ्कुमार्णववासिनी ।
कुसुमा कुसुमप्रीता कुलभूः कुलसुन्दरी ॥ १५९ ॥

कुमुद्वती कुमुदिनी कुशला कुलटालया ।
कुलटालयमध्यस्था कुलटासङ्गतोषिता ॥ १६० ॥

कुलटाभवनोद्युक्ता कुशावर्त्ता कुलार्णवा ।
कुलार्णवाचाररता कुण्डली कुण्डलाकृतिः ॥ १६१ ॥

कुमती च (तिश्च) कुलश्रेष्ठा कुलचक्रपरायणा ।
कूटस्था कूटदृष्टिश्च कुन्तला कुन्तलाकृतिः ॥ १६२ ॥

कुशलाकृतिरूपा च कूर्चबीजधरा च कूः ।
कुंकुंकुंकुंशब्दरता क्रूंक्रूंक्रूंक्रूंपरायणा ॥ १६३ ॥

कुंकुंकुंशब्दनिलया कुक्कुरालयवासिनी ।
कुक्कुरासङ्गसंयुक्ता कुक्कुरानन्तविग्रहा ॥ १६४ ॥

कूर्चारम्भा कूर्चबीजा कूर्चजापपरायणा ।
कुलिनी कुलसंस्थाना कूर्चकण्ठपरागतिः ॥ १६५ ॥

कूर्चवीणाभालदेशा कूर्चमस्तकभूषिता ।
कुलवृक्षगता कूर्मा कूर्माचलनिवासिनी ॥ १६६ ॥

कुलबिन्दुः कुलशिवा कुलशक्तिपरायणा ।
कुलबिन्दुमणिप्रख्या कुंकुमद्रुमवासिनी ॥ १६७ ॥

कुचमर्दनसन्तुष्टा कुचजापपरायणा ।
कुचस्पर्शनसन्तुष्टा कुचालिङ्गनहर्षदा ॥ १६८ ॥

कुगतिघ्नी कुबेरार्च्या कुचभूः कुलनायिका ।
कुगायना कुचा धारा कुमाता कुन्ददन्तिनी ॥ १६९ ॥

कुगेया कुहराभाषा(सा) कुगेयाकुघ्नदारिका ।
कीर्तिः किरातिनी क्लिन्ना किन्नरा किन्नरी क्रिया ॥ १७० ॥

क्रीङ्कारा क्रीञ्जपासक्ता क्रींहूंस्त्रींमन्त्ररूपिणी ।
किर्मीरितदृशापाङ्गी किशोरी च किरीटिनी ॥ १७१ ॥

कीटभाषा कीटयोनिः कीटमाता च कीटदा ।
किंशुका कीरभाषा च क्रियासारा क्रियावती ॥ १७२ ॥

कींकींशब्दपरा क्लांक्लींक्लूंक्लैंक्लौंमन्त्ररूपिणी ।
कांकींकूंकैंस्वरूपा च कःफट्मन्त्रस्वरूपिणी ॥ १७३ ॥

केतकीभूषणानन्दा केतकीभरणान्विता ।
कैकदा केशिनी केशी केशिसूदनतत्परा ॥ १७४ ॥

केशरूपा केशमुक्ता कैकेयी कौशिकी तथा ।
कैरवा कैरवाह्लादा केशरा केतुरूपिणी ॥ १७५ ॥

केशवाराध्यहृदया केशवासक्तमानसा ।
क्लैब्यविनाशिनी क्लैश्च क्लैम्बीजजपतोषिता ॥ १७६ ॥

कौशल्या कोशलाक्षी च कोशा च कोमला तथा ।
कोलापुरनिवासा च कोलासुरविनाशिनी ॥ १७७ ॥

कोटिरूपा कोटिरता क्रोधिनी क्रोधरूपिणी ।
केका च कोकिला कोटिः कोटिमन्त्रपरायणा ॥ १७८ ॥

कोट्यनन्तमन्त्रयुता कैरूपा केरलाश्रया ।
केरलाचारनिपुणा केरलेन्द्रगृहस्थिता ॥ १७९ ॥

केदाराश्रमसंस्था च केदारेश्वरपूजिता ।
क्रोधरूपा क्रोधपदा क्रोधमाता च कौशिकी ॥ १८० ॥

कोदण्डधारिणी क्रौञ्चा कौशल्या कौलमार्गगा ।
कौलिनी कौलिकाराध्या कौलिकागारवासिनी ॥ १८१ ॥

कौतुकी कौमुदी कौला कुमारी कौरवार्चिता ।
कौण्डिन्या कौशिकी क्रोधज्वालाभासुररूपिणी ॥ १८२ ॥

कोटिकालानलज्वाला कोटिमार्तण्डविग्रहा ।
कृत्तिका कृष्णवर्णा च कृष्णा कृत्या क्रियातुरा ॥ १८३ ॥

कृशाङ्गी कृतकृत्या च क्रः फट्स्वाहास्वरूपिणी ।
क्रौंक्रौंहूंफट्मन्त्रवर्णा क्रींह्रींहूंफट्नमस्स्वधा ॥ १८४ ॥

क्रींक्रींह्रींह्रींतथाहूंहूंफट्स्वाहामन्त्ररूपिणी ।
इति श्रीसर्वसाम्राज्यमेधानाम सहस्रकम् ॥ १८५ ॥

सुन्दरीशक्तिदानाख्य-स्वरूपाभिधमेव च।
कथितं दक्षिणाकाल्याः सुन्दर्यै प्रीतियोगतः ॥ १८६ ॥

वरदानप्रसङ्गेन रहस्यमपि दर्शितम्।
गोपनीयं सदा भक्त्या पठनीयं परात्परम् ॥ १८७ ॥

प्रातर्मध्याह्नकाले च मध्यार्धरात्रयोरपि।
यज्ञकाले जपान्ते च पठनीयं विशेषतः ॥ १८८ ॥

यः पठेत्साधको धीरः कालीरूपो हि वर्षतः।
पठेद्वा पाठयेद्वापि शृणोति श्रावयेदपि ॥ १८९ ॥

वाचकं तोषयेद्वापि स भवेत्कालिकातनुः।
सहेलं वा सलीलं वा यश्चैनं मानवः पठेत् ॥ १९० ॥

सर्वदुःखविनिर्मुक्तस्त्रैलोक्यविजयी कविः।
मृतवन्ध्या काकवन्ध्या कन्यावन्ध्या च वन्ध्यका ॥ १९१ ॥

पुष्पवन्ध्या शूलवन्ध्या शृणुयात्स्तोत्रमुत्तमम्।
सर्वसिद्धिप्रदातारं सत्कविं चिरजीवितम् ॥ १९२ ॥

पाण्डित्य कीर्त्तिसंयुक्तं लभते नात्र संशयः।
यं यं काममुपस्कृत्य कालीं ध्यात्वा जपेत्स्तवम्।
तं तं कामं करे कृत्वा मन्त्री भवति नान्यथा ॥ १९३ ॥

इति गदितमशेषं कालिकावर्णरूपं
प्रपठति यदि भक्त्या सर्वसिद्धीश्वरः स्यात् ॥
अभिनवसुखकामस्सर्वविद्याभिरामो
भवति सकलसिद्धिस्सर्ववीरासमृद्धिः ॥ १९४ ॥

इति रुद्रयामले कालीतन्त्रे श्रीकालीसहस्रनामस्तोत्रं संपूर्णम्।

॥ श्रीरस्तु ॥

# श्रीकालीसहस्रनामस्तोत्रम् ॥

श्रीशङ्कर उवाच—

कथितोऽयं महामन्त्रः सर्वमन्त्रोत्तमोत्तमः ।
यमासाद्य मया प्राप्तमैश्वर्यपदमुत्तमम् ॥ १ ॥

संयुक्तः परया भक्त्या यथोक्तविधिना भवान् ।
कुरुतामर्चनं देव्यास्त्रैलोक्य विजिगीषया ॥ २ ॥

परशुराम उवाच—

प्रसन्नो यदि मे देव परमेशः पुरातनः ।
रहस्यं परया देव्याः कृपया कथय प्रभो ॥ ३ ॥

यथार्चनं विना होमं विना न्यासं विना बलिम् ।
विना गन्धं विना पुष्पं विना नित्योदितक्रियाम् ॥ ४ ॥

प्राणायामं विना ध्यानं विना भूतविशोधनम् ।
विना जाप्यं विना दानं विना काली प्रसीदति ॥ ५ ॥

श्रीशङ्कर उवाच—

पृष्टं त्वयोत्तमं प्राज्ञ भृगुवंशविवर्धन ।
भक्तानामपि भक्तोऽसि त्वमेवं साधयिष्यसि ॥ ६ ॥

देवीं दानवकोटिघ्नीं लीलया रुधिरप्रियाम् ।
सदा स्तोत्रप्रियामुग्रां कामकौतुकलालसाम् ॥ ७ ॥

सर्वदानन्दहृदयां वासव्यासक्तमानसाम् ।
माध्वीकमत्स्यमांसादिरागिणीं रुधिरप्रियाम् ॥ ८ ॥

श्मशानवासिनीं प्रेतगणनृत्यमहोत्सवाम् ।
योगप्रभां योगिनीशां योगीन्द्रहृदये स्थिताम् ॥ ९ ॥

तामुग्रकालिकां राम प्रसादयितुमर्हसि ।
तस्याः स्तोत्रं महापुण्यं स्वयं काल्या प्रकाशितम् ॥ १० ॥

तव तत्कथयिष्यामि श्रुत्वा वत्सावधारय ।
गोपनीयं प्रयत्नेन पठनीयं परात्परम् ॥ ११ ॥

यस्यैककालपठनात्सर्वे विघ्नाः समाकुलाः ।
नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः ॥ १२ ॥

गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् ।
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः ॥ १३ ॥

राजानोऽपि च दासत्वं भजन्ति च परे जनाः ।
तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥ १४ ॥

निशीथे मुक्तये शंभुर्नग्नः शक्तिसमन्वितः ।
मनसा चिन्तयेत्कालीं महाकालीति लालिताम् ॥ १५ ॥

पठेत्सहस्र नामाख्यं स्तोत्रं मोक्षस्य साधनम् ।
प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ॥ १६ ॥

वेधा ब्रह्मस्मृतेर्ब्रह्म कुसुमैः पूजिता पुरा ।
प्रसीदति तथा काली यथानेन प्रसीदति ॥ १७ ॥

अस्य श्रीकालिका सहस्रनामस्तोत्रस्य महाकालभैरव ऋषिः, अनुष्टुप्छन्दः, कालिका देवता, कालिका प्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ओं श्मशानकालिका काली भद्रकाली कपालिनी ।
गुह्यकाली महाकाली कुरुकुल्लाऽविरोधिनी ॥ १८ ॥

कालिका कालरात्रिश्च महाकालनितम्बिनी ।
कालभैरवभार्या च कुलवर्त्मप्रकाशिनी ॥ १९ ॥

कामदा कामिनी काम्या कमनीयसुभाविनी ।
कस्तूरीरसनीलाङ्गी कुञ्जरेश्वरगामिनी ॥ २० ॥

ककारवर्णसर्वाङ्गी कामिनी कामसुन्दरी ।
कामार्ता कामरूपा च कामधेनुः कलावती ॥ २१ ॥

कान्ता कामस्वरूपा च कामाख्या कुलपालिनी ।
कुलीना कुलवत्यम्बा दुर्गा दुर्गार्तिनाशिनी ॥ २२ ॥

कौमारी कुलजा कृष्णाकृष्णदेहा कृशोदरी ।
कृशाङ्गी कुलिशाङ्गी च क्रींकारी कमला कला ॥ २३ ॥

करालास्या कराली च कुलकांताऽपराजिता ।
उग्रा चोग्रप्रभा दीप्ता विप्रचित्ता महाबला ॥ २४ ॥

नीला घना बलाका च मात्रामुद्रापिताऽसिता ।
ब्राह्मी नारायणी भद्रा सुभद्रा भक्तवत्सला ॥ २५ ॥

माहेश्वरी च चामुण्डा वाराही नारसिंहिका ।
वज्राङ्गी वज्रकंकाली नृमुण्डस्रग्विणी शिवा ॥ २६ ॥

मालिनी नरमुण्डाली गलद्रक्तविभूषणा ।
रक्तचन्दनसिक्ताङ्गी सिन्दूरारुणमस्तका ॥ २७ ॥

घोररूपा घोरदंष्ट्रा घोराघोरतरा शुभा ।
महादंष्ट्रा महामाया सुदती युगदन्तुरा ॥ २८ ॥

सुलोचना विरूपाक्षी विशालाक्षी त्रिलोचना ।
शारदेन्दु प्रसन्नास्या स्फुरत्स्मेरांबुजेक्षणा ॥ २९ ॥

अट्टहासा प्रसन्नास्या स्मेरवक्त्रा सुभाषिणी ।
प्रसन्नपद्मवदना स्मितास्या प्रियभाषिणी ॥ ३० ॥

कोटराक्षी कुलश्रेष्ठा महती बहुभाषिणी ।
सुमतिः कुमतिश्चण्डा चण्डमुंडाऽतिवेगिनी ॥ ३१ ॥

प्रचण्डा चण्डिका चण्डी चर्चिका चण्डवेगिनी ।
सुकेशी मुक्तकेशी च दीर्घकेशी महत्कचा ॥ ३२ ॥

प्रेतदेहाकर्णपूरा प्रेतपाणीसुमेखला ।
प्रेतासना प्रियप्रेता प्रेतभूमिकृतालया ॥ ३३ ॥

श्मशानवासिनी पुण्या पुण्यदा कुलपण्डिता ।
पुण्यालया पुण्यदेहा पुण्यश्लोकी च पावनी ॥ ३४ ॥

पुत्रा पवित्रा परमा पुरा पुण्यविभूषणा ।
पुण्यनाम्नी भीतिहरा वरदा खड्गपाणिनी ॥ ३५ ॥

नृमुण्डहस्तशस्ता च छिन्नमस्ता सुनासिका ।
दक्षिणा श्यामला श्यामा शान्ता पीनोन्नतस्तनी ॥ ३६ ॥

दिगंबरा घोररावा सृक्कान्ता रक्तवाहिनी ।
घोररावा शिवा खड्गा विशङ्का मदनातुरा ॥ ३७ ॥

मत्ता प्रमत्ता प्रमदा सुधासिन्धुनिवासिनी ।
अतिमत्ता महामत्ता सर्वाकर्षणकारिणी ॥ ३८ ॥

गीतप्रिया वाद्यरता प्रेतनृत्यपरायणा ।
चतुर्भुजा दशभुजा अष्टादशभुजा तथा ॥ ३९ ॥

कात्यायनी जगन्माता जगती परमेश्वरी ।
जगद्बन्धुर्जगद्धात्री जगदानन्दकारिणी ॥ ४० ॥

जगन्मयी हैमवती महामाया महामहा।
नागयज्ञोपवीताङ्गी नागिनी नागशायिनी ॥ ४१ ॥

नागकन्या देवकन्या गन्धर्वी किन्नरेश्वरी।
मोहरात्रिर्महारात्रिर्दारुणा भासुरांबरा ॥ ४२ ॥

विद्याधरी वसुमती यक्षिणी योगिनी जरा।
राक्षसी डाकिनी वेदमयी वेदविभूषणा ॥ ४३ ॥

श्रुतिः स्मृतिर्महाविद्या गुह्यविद्या पुरातनी।
चिन्त्याऽचिन्त्या सुधा स्वाहा निद्रा तन्द्रा च पार्वती ॥ ४४ ॥

अपर्णा निश्चला लोला सर्वविद्या तपस्विनी।
गङ्गा काशी शची सीता सती सत्यपरायणा ॥ ४५ ॥

नीतिस्सुनीतिस्सुरुचिस्तुष्टिः पुष्टिर्धृतिः क्षमा।
वाणी बुद्धिर्महालक्ष्मीर्लक्ष्मीर्नीलसरस्वती ॥ ४६ ॥

स्रोतस्वती सरस्वती मातङ्गी विजया जया।
नदी सिन्धुः सर्वमयी तारा शून्यनिवासिनी ॥ ४७ ॥

शुद्धा तरङ्गिणी मेधा लाकिनी बहुरूपिणी।
स्थूला सूक्ष्मा सूक्ष्मतरा भगवत्यनुरूपिणी ॥ ४८ ॥

परमाणुस्वरूपा च चिदानन्दस्वरूपिणी।
सदानन्दमयी सत्या सर्वानन्दस्वरूपिणी ॥ ४९ ॥

सुनन्दा नन्दिनी स्तुत्या स्तवनीयस्वभाविनी।
रङ्गिणी टङ्किनी चित्रा विचित्रा चित्ररूपिणी ॥ ५० ॥

पद्मा पद्मालया पद्ममुखी पद्मविभूषणा।
डाकिनी शाकिनी क्षान्ता राकिणी रुधिरप्रिया ॥ ५१ ॥

भ्रान्तिर्भवानी रुद्राणी मृडानी शत्रुमर्दिनी।
उपेन्द्राणी महेन्द्राणी ज्योत्स्ना चन्द्रस्वरूपिणी॥ ५२॥

सूर्यात्मिका रुद्रपत्नी रौद्री स्त्री प्रकृतिः पुमान्।
शक्तिर्मुक्तिर्मतिर्माता भक्तिर्मुक्तिः पतिव्रता॥ ५३॥

सर्वेश्वरी सर्वमाता शर्वाणी हरवल्लभा।
सर्वज्ञा सिद्धिदा सिद्धा भव्याऽभव्या भयापहा॥ ५४॥

कर्त्री हर्त्री पालयित्री शर्वरी तामसी दया।
तमिस्रातामसी स्थाणुः स्थिरा धीरा तपस्विनी॥ ५५॥

चार्वङ्गी चञ्चला लोलजिह्वा चारुचरित्रिणी।
त्रपा त्रपावती लज्जा विलज्जा हरयौवती॥ ५६॥

सत्यवती धर्मनिष्ठा श्रेष्ठा निष्ठुरवादिनी।
गरिष्ठा दुष्टसंहन्त्री विशिष्टा श्रेयसी घृणा॥ ५७॥

भीमा भयानका भीमनादिनी भीः प्रभावती।
वागीश्वरी श्रीर्यमुना यज्ञकर्त्री यजुःप्रिया॥ ५८॥

ऋक्सामाथर्वनिलया रागिणी शोभना सुरा।
कलकण्ठी कंबुकण्ठी वेणुवीणापरायणा॥ ५९॥

वंशिनी वैष्णवी स्वच्छा धात्री त्रिंजगदीश्वरी।
मधुमती कुण्डलिनी ऋद्धिः शुद्धिः शुचिस्मिता॥ ६०॥

रंभोर्वशीरतीरामा रोहिणी रेवती मघा।
शङ्खिनी चक्रिणी कृष्णा गदिनी पद्मिनी तथा॥ ६१॥

शूलिनी परिघास्त्रा च पाशिनी शार्ङ्गपाणिनी।
पिनाकधारिणी धूम्रा सुरभी वनमालिनी॥ ६२॥

रथिनी समरप्रीता वेगिनी रणपण्डिता।
जटिनी वज्रिणी नीललावण्यांबुधिचन्द्रिका ॥ ६३ ॥

बलिप्रिया सदा पूज्या दैत्येन्द्रमथिनी तथा।
महिषासुरसंहर्त्री कामिनी रक्तदन्तिका ॥ ६४ ॥

रक्तपा रुधिराक्ताङ्गी रक्तखर्परधारिणी।
रक्तप्रिया मांसरुचिर्वासवासक्तमानसा ॥ ६५ ॥

गलच्छोणितमुण्डाली कण्ठमालाविभूषणा।
शवासना चितान्तस्स्था माहेशी वृषवाहिनी ॥ ६६ ॥

व्याघ्रत्वगंबरा चीनचैलिनी सिंहवाहिनी।
वामदेवी महादेवी गौरी सर्वज्ञभामिनी ॥ ६७ ॥

बालिका तरुणी वृद्धा वृद्धमाता जरातुरा।
सुभ्रूर्विलासिनी ब्रह्मवादिनी ब्राह्मणी सती ॥ ६८ ॥

सुप्तवती चित्रलेखा लोपामुद्रा सुरेश्वरी।
अमोघाऽरुन्धती तीक्ष्णा भोगवत्यनुरागिणी ॥ ६९ ॥

मन्दाकिनी मन्दहासा ज्वालामुख्यसुरान्तका।
मानदा मानिनीमान्या माननीया मदातुरा ॥ ७० ॥

मदिरा मेदुरोन्मादा मेध्या साध्या प्रसादिनी।
सुमध्याऽनन्तगुणिनी सर्वलोकोत्तमोत्तमा ॥ ७१ ॥

जयदा जित्वरा जैत्री जयश्रीर्जयशालिनी।
सुखदा शुभदा सत्या सखी संक्षोभकारिणी ॥ ७२ ॥

शिवदूती भूतिमती विभूतिर्भूषणानना।
कौमारी कुलजा कुन्ती कुलस्त्रीकुलपालिका ॥ ७३ ॥

कीर्तिर्यशस्विनी भूषा भूष्ठा भूतपतिप्रिया।
सुगुणा निर्गुणाऽधिष्ठा निष्ठा काष्ठा प्रकाशिनी॥ ७४॥

धनिष्ठा धनदा धन्या वसुधा सुप्रकाशिनी।
उर्वीगुर्वी गुरुश्रेष्ठा षड्गुणा त्रिगुणात्मिका॥ ७५॥

राज्ञामाज्ञा महाप्राज्ञा सुगुणा निर्गुणात्मिका।
महाकुलीना निष्कामा सकामा कामजीवना॥ ७६॥

कामदेवकला रामाऽभिरामा शिवनर्तकी।
चिन्तामणिः कल्पलता जाग्रती दीनवत्सला॥ ७७॥

कार्तिकी कृत्तिका कृत्या अयोध्या विषमा समा।
सुमन्त्रा मन्त्रिणी घूर्णा ह्लादिनी क्लेशनाशिनी॥ ७८॥

त्रैलोक्यजननी हृष्टा निर्मांसामलरूपिणी।
तडागनिम्नजठरा शुष्कमांसास्थिमालिनी॥ ७९॥

अवन्ती मधुरा हृद्या त्रैलोक्यपावनक्षमा।
व्यक्ताव्यक्ताऽनेकमूर्तिश्शरभी भीमनादिनी॥ ८०॥

क्षेमङ्करी शाङ्करी च सर्वसम्मोहकारिणी।
ऊर्ध्वतेजस्विनी क्लिन्ना महातेजस्विनी तथा॥ ८१॥

अद्वैता योगिनी पूज्या सुरभी सर्वमङ्गला।
सर्वप्रियङ्करी भोग्या धनिनी पिशिताशना॥ ८२॥

भयङ्करी पापहरा निष्कलङ्का वशङ्करी।
आशा तृष्णा चन्द्रकला निद्राणा वायुवेगिनी॥ ८३॥

सहस्रसूर्यसङ्काशा चन्द्रकोटिसमप्रभा।
निशुम्भशुम्भसंहर्त्री रक्तबीजविनाशिनी॥ ८४॥

मधुकैटभसंहर्त्री महिषासरघातिनी।
वह्निमंडलमध्यस्था सर्वसत्वप्रतिष्ठिता ॥ ८५ ॥

सर्वाचारवती सर्वदेवकन्याऽतिदेवता।
दक्षकन्या दक्षयज्ञनाशिनी दुर्गतारिणी ॥ ८६ ॥

इज्या पूज्या विभा भूतिः सत्कीर्तिर्ब्रह्मचारिणी।
रंभोरूश्चतुरा राका जयन्ती वरुणा कुहूः ॥ ८७ ॥

मनस्विनी देवमाता यशस्या ब्रह्मवादिनी।
सिद्धिदा वृद्धिदा वृद्धिः सर्वाद्या सर्वदायिनी ॥ ८८ ॥

आधाररूपिणी ध्येया मूलाधारनिवासिनी।
आज्ञा प्रज्ञा पूर्णमनाश्चन्द्रमुख्यनुकूलिनी ॥ ८९ ॥

वावदूका निम्ननाभिस्सत्यसन्धा दृढव्रता।
आन्वीक्षिकी दण्डनीतिस्त्रयी त्रिदिवसुन्दरी ॥ ९० ॥

ज्वालिनी ज्वलिनी शैलतनया विंध्यवासिनी।
प्रत्यया खेचरी धैर्या तुरीया विमलातुरा ॥ ९१ ॥

प्रगल्भा वारुणी क्षामा दर्शिनी विस्फुलिङ्गिनी।
भक्तिः सिद्धिः सदाप्राप्तिः प्रकाम्या महिमाऽणिमा ॥ ९२ ॥

ईक्षा सिद्धिर्वशित्वा च ईशित्वौर्ध्वनिवासिनी।
लघिमा चैव सावित्री गायत्री भुवनेश्वरी ॥ ९३ ॥

मनोहरा चिता दिव्या देव्युदारा मनोरमा।
पिङ्गला कपिला जिह्वा रसज्ञा रसिका रसा ॥ ९४ ॥

सुषुम्नेडायोगवती गान्धारी नवकान्तका।
पाञ्चालीरुक्मिणीराधाराध्या भीमा च राधिका ॥ ९५ ॥

अमृता तुलसीबृन्दा कैटभी कपटेश्वरी।
उग्रचण्डेश्वरी वीरजननी वीरसुन्दरी॥ ९६॥

उग्रतारा यशोदाख्या देवकी देवमानिता।
निरञ्जना चित्रदेवी क्रोधिनी कुलदीपिका॥ ९७॥

कुलरागीश्वरी ज्वाला मात्रिका द्राविणी द्रवा।
योगीश्वरी महामारी भ्रामरी बिन्दुरूपिणी॥ ९८॥

दूती प्राणेश्वरी गुप्ता बहुला डामरी प्रभा।
कुब्जिका ज्ञानिनी ज्येष्ठा भुशुण्डी प्रकटाकृतिः॥ ९९॥

द्राविणी गोपिनी मायाकामबीजेश्वरी प्रिया।
शाकम्भरी कोकनदा सुसत्या च तिलोत्तमा॥ १००॥

अमेया विक्रमा क्रूरा सम्यक्छीला त्रिविक्रमा।
स्वस्तिर्हव्यवहा प्रीतिरुक्मा धूम्रार्चिरङ्गदा॥ १०१॥

तपिनी तापिनी विश्वभोगदा धरणीधरा।
त्रिखण्डा रोधिनी वश्या सकला शब्दरूपिणी॥ १०२॥

बीजरूपा महामुद्रा वशिनी योगरूपिणी।
अनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गरूपिणी॥ १०३॥

अनङ्गमदनाऽनङ्गरेखाऽनङ्गांकुशेश्वरी।
अनङ्गमालिनी कामेश्वरी सर्वार्थसाधिका॥ १०४॥

सर्वतन्त्रमयी सर्वमोदिन्यानन्दरूपिणी।
वज्रेश्वरी च जयिनी सर्वदुःखक्षयङ्करी॥ १०५॥

षडङ्गयुवती योगयुक्ता ज्वालांशुमालिनी।
दुराशया दुराधारा दुर्जया दुर्गरूपिणी॥ १०६॥

दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा ।
हंसेश्वरी त्रिलोकस्था शाकम्भर्यनुरागिणी ॥ १०७ ॥

त्रिकोणनिलया नित्या परमामृतरञ्जिता ।
महाविद्येश्वरी श्वेता भेरुण्डा कुलसुन्दरी ॥ १०८ ॥

त्वरिता भक्तिसंयुक्ता भक्तिवश्या सनातनी ।
भक्तानन्दमयी भक्तभाविता भक्तशङ्करी ॥ १०९ ॥

सर्वसौन्दर्यनिलया सर्वसौभाग्यशालिनी ।
सर्वसंभोगभवना सर्वसौख्यानुरूपिणी ॥ ११० ॥

कुमारीपूजनरता कुमारीव्रतचारिणी ।
कुमारीभक्तिसुखिनी कुमारीरूपधारिणी ॥ १११ ॥

कुमारीपूजकप्रीता कुमारीप्रीतिदप्रिया ।
कुमारीसेवकासङ्गा कुमारीसेवकालया ॥ ११२ ॥

आनन्दभैरवी बालभैरवी वटुभैरवी ।
श्मशानभैरवी कालभैरवी पुरभैरवी ॥ ११३ ॥

महाभैरवपत्नी च परमानन्दभैरवी ।
सुरानन्दभैरवी च उन्मदानन्दभैरवी ॥ ११४ ॥

यज्ञानन्दभैरवी च तथा तरुणभैरवी ।
ज्ञानानन्दभैरवी च अमृतानन्दभैरवी ॥ ११५ ॥

महाभयङ्करी तीव्रा तीव्रवेगा तरस्विनी ।
त्रिपुरा परमेशानी सुन्दरी पुरसुन्दरी ॥ ११६ ॥

त्रिपुरेशी पञ्चदशी पञ्चमी पुरवासिनी ।
महासप्तदशी चैव षोडशी त्रिपुरेश्वरी ॥ ११७ ॥

महाङ्कुशस्वरूपा च महाचक्रेश्वरी तथा ।
नवचक्रेश्वरी चक्रेश्वरी त्रिपुरमालिनी ॥ ११८ ॥

राजचक्रेश्वरी राज्ञी महात्रिपुरसुन्दरी ।
सिन्दूरपूररुचिरा श्रीमत्त्रिपुरसुन्दरी ॥ ११९ ॥

सर्वाङ्गसुन्दरी रक्तारक्तवस्त्रोत्तरीयका ।
यवायावकसिन्दूररक्तचन्दनधारिणी ॥ १२० ॥

यवायावकसिन्दूर रक्तचन्दनरूपधृक् ।
चमरीवालकुटिला निर्मल श्यामकेशिनी ॥ १२१ ॥

वज्रमौक्तिकरत्नाढ्या किरीटकुण्डलोज्ज्वला ।
रत्नकुण्डलसंयुक्ता स्फुरद्गण्डमनोरमा ॥ १२२ ॥

कुञ्जरेश्वरकुम्भोत्थमुक्तारञ्जितनासिका ।
मुक्ता विद्रुममाणिक्य हीराढ्यस्तनमण्डला ॥ १२३ ॥

सूर्यकान्तेन्दुकान्ताढ्या स्पर्शाश्मगलभूषणा ।
बीजपूरस्फुरद्बीजदन्तपंक्तिरनुत्तमा ॥ १२४ ॥

कामकोदण्डकाभग्नभ्रूकटाक्षप्रवर्षिणी ।
मातङ्गकुम्भवक्षोजा लसत्कनकदक्षिणा ॥ १२५ ॥

मनोज्ञशष्कुलीकर्णा हंसीगतिविडम्बिनी ।
पद्मरागाङ्गदद्योतद्दोश्चतुष्कप्रकाशिनी ॥ १२६ ॥

कर्पूरागरुकस्तरीकुङ्कुमद्रवलेपिता ।
विचित्ररत्नपृथिवीकल्पशाखितलस्थिता ॥ १२७ ॥

रत्नदीपस्फुरद्रत्नसिंहासननिवासिनी ।
षट्चक्रभेदनकरी परमानन्दरूपिणी ॥ १२८ ॥

सहस्रदलपद्मान्ता चन्द्रमण्डलवर्तिनी।
ब्रह्मरूपा शिवक्रोडा नानासुखविलासिनी ॥ १२९ ॥

हरविष्णुविरिंचीन्द्रग्रहनायकसेविता।
शिवा शैवा च रुद्राणी तथैव शिवनादिनी ॥ १३० ॥

महादेवप्रिया देवी तथैवानङ्गमेखला।
डाकिनी योगिनी चैव तथोपयोगिनी मता ॥ १३१ ॥

माहेश्वरी वैष्णवी च भ्रामरी शिवरूपिणी।
अलंबुसा भोगवती क्रोधरूपा सुमेखला ॥ १३२ ॥

गान्धारी हस्तिजिह्वा च इडा चैव शुभङ्करी।
पिङ्गला दक्षसूत्री च सुषुम्ना चैव गन्धिनी ॥ १३३ ॥

भगात्मिका भगाधारा भगेशी भगरूपिणी।
लिङ्गाख्या चैव कामेशी त्रिपुरा भैरवी तथा ॥ १३४ ॥

लिङ्गगीतिस्सुगीतिश्च लिङ्गस्था लिङ्गरूपधृक्।
लिङ्गमाला लिङ्गभवा लिङ्गलिङ्गा च पावकी ॥ १३५ ॥

भगवती कौशिकी च प्रेमरूपा प्रियंवदा।
गृध्ररूपी शिवारूपा चक्रेशी चक्ररूपधृक् ॥ १३६ ॥

आत्मयोनिर्ब्रह्मयोनिर्जगद्योनिरयोनिजा।
भगरूपा भगस्थात्री भगिनी भगमालिनी ॥ १३७ ॥

भगात्मिका भगाधाररूपिणी भगशालिनी।
लिङ्गाभिधायिनी लिङ्गप्रिया लिङ्गनिवासिनी ॥ १३८ ॥

लिङ्गस्था लिङ्गिनी लिङ्गरूपिणी लिङ्गसुन्दरी।
लिङ्गरीतिर्महाप्रीतिर्भगगीतिर्महासुखा ॥ १३९ ॥

लिङ्गनामसदानन्दा भगनामसदारतिः ।
भगनामसदानन्दा लिङ्गनामसदारतिः ॥ १४० ॥

लिङ्गमालाकराभूषा भगमालाविभूषणा ।
भगलिङ्गामृतवृता भगलिङ्गामृतात्मिका ॥ १४१ ॥

भगलिङ्गार्चनप्रीता भगलिङ्गस्वरूपिणी ।
भगलिङ्गस्वरूपा च भगलिङ्गसुखावहा ॥ १४२ ॥

स्वयम्भूकुसुमप्रीता स्वयम्भूकुसुमार्चिता ।
स्वयम्भू कुसुमप्राणा स्वयम्भू कुसुमोत्थिता ॥ १४३ ॥

स्वयम्भू कुसुमस्नाता स्वयम्भू पुष्पतर्पिता ।
स्वयम्भूपुष्पघटिता स्वयम्भूपुष्पधारिणी ॥ १४४ ॥

स्वयम्भूपुष्पतिलका स्वयंभूपुष्पचर्चिता ।
स्वयम्भूपुष्पनिरता स्वयम्भूकुसुमाग्रहा ॥ १४५ ॥

स्वयम्भूपुष्पयज्ञेशा स्वयम्भूकुसुममालिका ।
स्वयम्भूपुष्पनिचिता स्वयम्भूकुसुमप्रिया ॥ १४६ ॥

स्वयम्भूकुसुमादान लालसोन्मत्तमानसा ।
स्वयम्भूकुसुमानन्दलहरी स्निग्धदेहिनी ॥ १४७ ॥

स्वयम्भूकुसुमाधारा स्वयम्भूकुसुमाकुला ।
स्वयम्भूपुष्पनिलया स्वयम्भूपुष्पवासिनी ॥ १४८ ॥

स्वयम्भूकुसुमस्निग्धा स्वयम्भूकुसुमात्मिका ।
स्वयम्भूपुष्पकरिणी स्वयम्भूपुष्पमालिका ॥ १४९ ॥

स्वयम्भूकुसुमन्यासा स्वयम्भूकुसुमप्रभा ।
स्वयम्भूकुसुमज्ञाना स्वयम्भूपुष्पभोगिनी ॥ १५० ॥

स्वयम्भूकुसुमोल्लासा स्वयम्भूपुष्पवर्षिणी ।
स्वयम्भूकुसुमानन्दा स्वयम्भूपुष्पपुष्पिणी ॥ १५१ ॥

स्वयम्भूकुसुमोत्साहा स्वयम्भूपुष्परूपिणी ।
स्वयम्भूकुसुमोन्मादा स्वयम्भूपुष्पसुन्दरी ॥ १५२ ॥

स्वयम्भूकुसुमाराध्या स्वयम्भूकुसुमोद्भवा ।
स्वयम्भूकुसुमव्यग्रा स्वयम्भूपुष्पपूजिता ॥ १५३ ॥

स्वयम्भूपूजकप्राज्ञा स्वयम्भूहोतृमात्रिका ।
स्वयंभूदातृरक्षित्री स्वयंभूभक्तभाविका ॥ १५४ ॥

स्वयम्भूकुसुमप्रीता स्वयम्भूपूजकप्रिया ।
स्वयम्भूवन्दकाधारा स्वयम्भूनिन्दकान्तका ॥ १५५ ॥

स्वयम्भूप्रदसर्वस्वा स्वयम्भूप्रदपुत्रिणी ।
स्वयम्भूप्रदसस्मेरा स्वयंभूतशरीरिणी ॥ १५६ ॥

सर्वलोकोद्भवप्रीता सर्वलोकोद्भवात्मिका ।
सर्वकालोद्भवोद्भावा सर्वकालोद्भवोद्भवा ॥ १५७

कुण्डपुष्पसमप्रीतिः कुण्डपुष्पसमारतिः ।
कुण्डगोलोद्भवप्रीता कुण्डगोलोद्भवात्मिका ॥ १५८ ॥

स्वयंभूर्वा शिवा शक्ता पावनी लोकपावनी ।
कीर्तिर्यशस्विनी मेधा विमेधा सुरसुन्दरी ॥ १५९ ॥

अश्विनी कृत्तिका पुष्या तेजस्विचन्द्रमण्डला ।
सूक्ष्मासूक्ष्मप्रदा सूक्ष्मासूक्ष्मभयविनाशिनी ॥ १६० ॥

वरदाभयदा चैव मुक्तिबन्धविनाशिनी ।
कामुकी कामदा क्षान्ता कामाख्या कुलसुन्दरी ॥ १६१ ॥

सुखदा दुःखदा मोक्षा मोक्षदार्थप्रकाशिनी ।
दुष्टादुष्टमतिश्चैव सर्वकार्यविनाशिनी ॥ १६२ ॥

शुक्राधारा शुक्ररूपा शुक्रसिन्धुनिवासिनी ।
शुक्रालया शुक्रभोगा शुक्रपूजासदारतिः ॥ १६३ ॥

शुक्रपूज्या शुक्रहोमसन्तुष्टा शुक्रवत्सला ।
शुक्रमूर्तिः शुक्रदेहा शुक्रपूजकपुत्रिणी ॥ १६४ ॥

शुक्रस्था शुक्रिणी शुक्रसंस्कृता शुक्रसुन्दरी ।
शुक्रस्नाता शुक्रकरी शुक्रसेव्याऽतिशुक्रिणी ॥

महाशुक्रा शुक्रभवा शुक्रवृष्टिविधायिनी ।
शुक्राभिधेया शुक्रार्हा शुक्रवन्दकवन्दिता ॥ १६६ ॥

शुक्रानन्दकरी शुक्रसदानन्दविधायिनी ।
शुक्रोत्साहा सदा शुक्रपूर्णा शुक्रमनोरमा ॥ १६७ ॥

शुक्रपूजकसर्वस्वा शुक्रनिन्दकनाशिनी ।
शुक्रात्मिका शुक्रसंपच्छुक्राकर्षणकारिणी ॥ १६८ ॥

रक्ताशया रक्तभोगा रक्तपूजासदारतिः ।
रक्तपूज्या रक्तहोमा रक्तस्था रक्तवत्सला ॥ १६९ ॥

रक्तपूर्णारक्तदेहा रक्तपूजकपुत्रिणी ।
रक्ताख्या रक्तिनी रक्तसंस्कृता रक्तसुन्दरी ॥ १७० ॥

रक्ताभिदेहा रक्तार्हा रक्तवन्दकवन्दिता ।
महारक्ता रक्तभवा रक्तवृष्टिविधायिनी ॥ १७१ ॥

रक्तस्नाता रक्तप्रीता रक्तसेव्याऽतिरक्तिनी ।
रक्तानन्दकरी रक्तसदानन्दविधायिनी ॥ १७२ ॥

रक्तारक्ता रक्तपूर्णा रक्तसव्येक्षणीरमा।
रक्तसेवकसर्वस्वा रक्तनिन्दकनाशिनी॥ १७३॥

रक्तात्मिका रक्तरूपा रक्ताकर्षणकारिणी।
रक्तोत्साहा रक्तव्यग्रा रक्तपानपरायणा॥ १७४॥

शोणितानन्दजननी कल्लोलस्निग्धरूपिणी।
साधकान्तर्गता देवी पार्वती पापनाशिनी॥ १७५॥

साधूनां हृदि संस्थात्री साधकानन्दकारिणी।
साधकानां च जननी साधकप्रियकारिणी॥ १७६॥

साधकप्रचुरानन्दसम्पत्तिसुखदायिनी।
साधकासाधकप्राणा साधकासक्तमानसा॥ १७७॥

साधकोत्तमसर्वस्वा साधका भक्तरक्तपा।
साधकानन्दसन्तोषा साधकारिविनाशिनी॥ १७८॥

आत्मविद्या ब्रह्मविद्या परब्रह्मकुटुम्बिनी।
त्रिकूटस्था पञ्चकूटा सर्वकूटशरीरिणी॥ १७९॥

सर्ववर्णमयी वर्णजपमालाविधायिनी।
इति श्रीकालिकानाम्नां सहस्रं शिवभाषितम्॥ १८०॥

गुह्याद्गुह्यतरं साक्षान्महापातकनाशनम्।
पूजाकाले निशीथे च संन्ध्ययोरुभयोरपि॥ १८१॥

लभते गाणपत्यं स यः पठेत्साधकोत्तमः।
यः पठेत्पाठयेद्वापि शृणोति श्रावयेदपि॥ १८२॥

सर्वपापविनिर्मुक्तः स याति कालिकापदम्।
श्रद्धयाऽश्रद्धया वापि यः कश्चिन्मानवः पठेत्॥ १८३॥

दुर्गाद्दुर्गतरं तीर्त्वा स याति कालिकापदम् ।
वन्ध्या वा काकवन्ध्या च मृतपुत्रा च याङ्गना ॥ १८४ ॥

श्रुत्वा स्तोत्रमिदं पुत्रान् लभते चिरजीविनः ।
यं यं कामयते कामं पठन्स्तोत्रमनुत्तमम् ॥ १८५ ॥

देवीवरप्रदानेन तं तं प्राप्नोति नित्यशः ।
कुहूपूर्णेंदुसंक्रान्त्यां चतुर्दश्यष्टमीषु च ॥ १८६ ॥

नवम्यां मङ्गलदिने पठेत् स्तोत्रं प्रयत्नतः ।
सहस्रनामभिर्देवीं स्तौति भक्तिपरायणः ॥ १८७ ॥

मातेव कालिका यस्य सर्वत्र हितकारिणी ।
कुलीनाय महेच्छाय दुर्गाभक्तिपराय च ॥ १८८ ॥

वैष्णवाय विशुद्धाय शक्तिभक्ताय मन्त्रिणे ।
अद्वैतानन्दरूपाय निवेदितपराय च ॥ १८९ ॥

दद्यात् स्तोत्रं महादेव्याः साधकाय तथाऽऽज्ञया ।
गुरुविष्णुमहेशानामभेदेन महेश्वरीम् ॥ १९० ॥

समन्तात् भावयेन्मन्त्री महेशो नात्र संशयः ।
स शाक्तः शिवभक्तश्च स एव वैष्णवोत्तमः ॥ १९१ ॥

संपूज्य स्तौति यः कालीमद्वैतभावमावहन् ।
देव्यानन्देन सानन्दो देवीभक्त्येकभक्तिमान् ॥ १९२ ॥

स एव धन्यो यस्यार्थे महेशो व्यग्रमानसः ।
कामयित्वा यथाकामं स्तवमेनमुदीरयेत् ॥ १९३ ॥

सर्वरोगैः परित्यक्तो जायते मदनोपमः ।
आत्मानं कालिकात्मानं भावयन् स्तौति यः शिवाम् ।
शिवोपमं गुरुं ध्यात्वा स एव श्रीसदाशिवः ॥ १९४ ॥

यस्यालये तिष्ठति नूनमेतत् स्तोत्रं भवान्या लिखितं विधिज्ञैः ।
गोरोचनालक्तककुङ्कुमाक्तकर्पूरसिन्दूरमधुद्रवेण ॥ १९५ ॥

न तत्र चोरस्य भयं न हारयो न वैरिभिर्नाशनिवह्निभीतिः ।
उत्पातवायोरपि नात्र शङ्का लक्ष्मीः स्वयं तत्र वसेदलोला ॥ १९६ ॥

स्तोत्रं पठेत्तत्तदनन्तपुण्यं देवीपदाम्भोजपरो मनुष्यः ।
विधानपूजाफलमेव सम्यक्प्राप्नोति सम्पूर्णमनोरथोऽसौ ॥१९७ ॥

मुक्ताः श्रीचरणारविन्दनिरताः स्वर्गामिनो भोगिनो
ब्रह्मोपेन्द्रशिवात्मकार्चनरता लोकेऽपि संलेभिरे ।
श्रीमच्छङ्करभक्तिपूर्वकमहादेवीपदध्यायिनो
मुक्तिर्भुक्तिमतिः स्वयं स्तुतिपरा भक्तिः करस्थायिनी ॥ १९८ ॥

इति श्रीकालिकाकुलसर्वस्वे हरपरशुरामसंवादे
श्रीकालीसहस्रनामस्तोत्रं सम्पूर्णम्

# श्री ताराध्यानम्

१. विश्वव्यापकवारिमध्यविलसत्श्वेतांबुजन्मस्थितां
कर्त्रीखड्गकपालनीलनलिनैः राजत्करां नीलभाम्।
काञ्ची कुण्डलहारकङ्कणलसत्केयूरमञ्जीरकां
आप्तैः नागवरैः विभूषिततनुं आरक्तनेत्रत्रयाम्॥
पिंगैकाग्रजटां लसत्सुरसनां दंष्ट्राकरालाननां
हस्तैश्चापि वरं कटौ विदधतीं श्वेतास्थिपट्टालिकाम्।
अक्षोभ्येण विराजमान शिरसं स्मेराननांभोरुहां
तारां शावहृदासनां दृढकुचामंबां त्रिलोक्या भजे॥

२. श्वेतांबरां शारदचन्द्रकान्तिं
सद्भूषणां चन्द्रकलावतंसाम्।
कर्त्री कपालान्वित पादपद्मां
तारां त्रिनेत्रां प्रभजेऽखिलर्द्ध्यै॥

३. प्रत्यालीढपदार्पितांघ्रि शवहृद्घोराट्टहासा परा
खड्गेन्दीवरकर्त्रिखर्परभुजा हुङ्कारबीजोद्भवा।
खर्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्॥

४. सात्विकमूर्तिध्यानम्

श्वेतांबराढ्यां हंसस्थां मुक्ताभरणभूषिताम्।
चतुर्वक्त्रामष्टभुजैः दधानां कुण्डिकांबुजे॥
वराभये पाशशक्ती अक्षस्रक्पुष्पमालिके।
शब्दपाथोनिधेर्मध्ये तारां स्थितिकरीं भजे॥

५. राजसमूर्ति ध्यानम्

रक्तांबरां रक्तसिंहासनस्थां हेमभूषिताम् ।
एकवक्त्रां वेदसंख्यैर्भुजैः संबिभ्रतीं क्रमात् ॥

अक्षमालां पानपात्रं अभयं वरमुत्तमम् ।
श्वेतद्वीपस्थितां वन्दे तारां स्थितिपरायणाम् ॥

६. तामसमूर्तिध्यानम्

कृष्णांबराढ्यां नौसंस्थां अस्थ्याभरणभूषिताम् ।
नववक्त्रां भुजैरष्टादशभिः दधतीं वरम् ॥

अभयं परशुं दर्वीं खड्गं पाशुपतं हलम् ।
भिन्दिं शूलं च मुशलं कर्त्रीं शक्तिं त्रिशीर्षकम् ॥

संहारास्त्रं वज्रपाशौ खट्वाङ्गं गदया सह ।
रक्तांभोधौ स्थितां वन्दे देवीं संहारकारिणीम् ॥

# श्रीताराशतनामस्तोत्रम्

श्रीशिव उवाच ।।

तारणी तरला तन्वी तारा तरुणवल्लरी ।
तीररूपा तरी श्यामा तनुक्षीणपयोधरा ।। १ ।।

तुरीया तरला तीव्रगमना नीलवाहिनी ।
उग्रतारा जया चण्डी श्रीमदेकजटाशिराः।। २ ।।

तरुणी शाम्भवी छिन्नभाला च भद्रतारिणी ।
उग्रा चोग्रप्रभा नीला कृष्णा नीलसरस्वती ।। ३ ।।

द्वितीया शोभना नित्या नवीना नित्यनूतना ।
चण्डिका विजयाराध्या देवी गगनवाहिनी ।। ४ ।।

अट्टहास्या करालास्या चरास्या दितिपूजिता ।
सगुणा सगुणाराध्या हरीन्द्रदेवपूजिता ।। ५ ।।

रक्तप्रिया च रक्ताक्षी रुधिरास्यविभूषिता ।
बलिप्रिया बलिरता दुर्गा बलवती बला ।। ६ ।।

बलप्रिया बलरता बलरामप्रपूजिता ।
अर्धकेशेश्वरी केशा केशवासविभूषिता ।। ७ ।।

पद्ममाला च पद्माक्षी कामाख्या गिरिनन्दिनी ।
दक्षिणा चैव दक्षा च दक्षजा दक्षिणे रता ।। ८ ।।

वज्रपुष्पप्रिया रक्तप्रिया कुसुमभूषिता ।
माहेश्वरी महादेवप्रिया पञ्चविभूषिता ।। ९ ।।

इडा च पिङ्गला चैव सुषुम्ना प्राणरूपिणी ।
गान्धारी पञ्चमी पञ्चाननादिपरिपूजिता ।। १० ।।

तथ्यविद्या तथ्यरूपा तथ्यमार्गानुसारिणी।
तत्त्वप्रिया तत्वरूपा तत्त्वज्ञानात्मिकाऽनघा॥ ११ ॥

ताण्डवाचारसन्तुष्टा ताण्डवप्रियकारिणी।
तालदानरता क्रूरतापिनी तरणिप्रभा॥ १२ ॥

त्रपायुक्ता त्रपामुक्ता तर्पिता तृप्तिकारिणी।
तारुण्यभावसन्तुष्टा शक्तिर्भक्तानुरागिणी॥ १३ ॥

शिवासक्ता शिवरतिः शिवभक्तिपरायणा।
ताम्रद्युतिस्ताम्ररागा ताम्रपात्रप्रभोजिनी॥ १४ ॥

बलभद्रप्रेमरता बलिभुग्बलिकल्पिनी।
रामरूपा रामशक्ती रामरूपानुकारिणी॥१५ ॥

इत्येतत्कथितं देवि रहस्यं परमाद्भुतम्।
श्रुत्वा मोक्षमवाप्नोति तारादेव्याः प्रसादतः॥ १६ ॥

य इदं पठति स्तोत्रं तारास्तुतिरहस्यकम्।
सर्वसिद्धियुतो भूत्वा विहरेत् क्षितिमण्डले॥ १७ ॥

तस्यैव मन्त्रसिद्धिः स्यान्मम सिद्धिरनुत्तमा।
भवत्येव महामाये सत्यं सत्यं न संशयः॥ १८ ॥

मन्दे मङ्गलवारे च यः पठेन्निशि संयतः।
तस्यैव मन्त्रसिद्धिस्स्याद् गाणपत्यं लभेत सः॥ १९ ॥

श्रद्धयाऽश्रद्धया वापि पठेत्तारारहस्यकम्।
सोऽचिरेणैव कालेन जीवन्मुक्तः शिवो भवेत्॥ २० ॥

सहस्रावर्त्तनाद्देवि पुरश्चर्याफलं लभेत्।
एवं सततयुक्ता ये ध्यायन्तस्त्वामुपासते॥
ते कृतार्था महेशानि मृत्युसंसारवर्त्मनः॥ २१ ॥

इति स्वर्णमालातन्त्रे ताराशतनामस्तोत्रं समाप्तम्॥

# श्रीतारासहस्रनामस्तोत्रम् (तकारादि)

वसिष्ठ उवाच ॥

नाम्नां सहस्रं ताराया मुखाम्भोजाद्विनिर्गतम् ।
मन्त्रसिद्धिकरं प्रोक्तं तन्मे वद पितामह ॥ १ ॥

ब्रह्मोवाच ॥

शृणु वत्स प्रवक्ष्यामि रहस्यं सर्वसिद्धिदम् ।
यस्योपदेशमात्रेण तव सिद्धिर्भविष्यति ॥ २ ॥

महाप्रलयकालादौ नष्टे स्थावरजङ्गमे ।
महाकारं समाकर्ण्य कृपया संहृतं तनौ ॥ ३ ॥

नाम्ना तेन महातारा ख्याता सा ब्रह्मरूपिणी ।
महाशूलत्रयं कृत्वा तत्र चैकाकिनी स्थिता ॥ ४ ॥

पुनः सृष्टेश्चिकीर्षाभूद्दिव्यसाम्राज्यसञ्ज्ञकम् ।
नाम्नां सहस्रमस्यास्तु तकाराद्यं मया स्मृतम् ॥ ५ ॥

तत्प्रभावेण ब्रह्माण्डं निर्मितं सुदृढं महत् ।
आविर्भूता वयं तन्त्रयन्त्रैस्तस्याः पुरा द्विज ॥ ६ ॥

स्वस्य कार्यार्थिनस्तत्र भ्रान्ता भूम्यां यथा वयम् ।
तयोपदिष्टाः कृपया भवामस्सृष्टिकारकाः ॥ ७ ॥

तस्याः प्रसादाद्विप्रेन्द्र त्रयो ब्रह्माण्डनायकाः ।
अन्ये सुरगणास्सर्वे तस्याः पादप्रसेवकाः ॥ ८ ॥

पठनाद् धारणात्सृष्टेः कर्त्ताहं पालको हरिः ।
तत्त्वाक्षरोपदेशेन संहर्त्ता शङ्करस्स्वयम् ॥ ९ ॥

ऋषिच्छन्दादिकं ध्यानं मूलवत्परिकीर्त्तितम्।
नियोगो मन्त्रसिद्धौ च पुरुषार्थचतुष्टये ॥ १० ॥

अस्य श्रीतारासहस्रनामस्तोत्रमहामन्त्रस्य वसिष्ठः ऋषिः। अनुष्टुप् छन्दः, तारा देवता। नामपारायणे विनियोगः।

ओं ह्रां अङ्गुष्ठाभ्यां नमः। ओं ह्रीं तर्जनीभ्यां नमः। ओं ह्रूं मध्यमाभ्यां नमः। ओं ह्रैं अनामिकाभ्यां नमः। ओं ह्रौं कनिष्ठिकाभ्यां नमः। ओं ह्रः करतलकरपृष्ठाभ्यां नमः। ओं ह्रां हृदयाय नमः। ओं ह्रीं शिरसे स्वाहा। ओं ह्रूं शिखायै वषट्। ओं ह्रैं कवचाय हुम्।
ओं ह्रौं नेत्रत्रयाय वौषट्। ओं ह्रः अस्त्राय फट्। भूर्भुवस्सुवरों (इति दिग्बन्धः)।

प्रत्यालीढपदार्पितांघ्रि शवहृद्घोराट्टहासा परा
खड्गेन्दीवरकर्त्रिखर्परभुजा हुंकारबीजोद्भवा।
खर्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्॥

लमित्यादि पञ्चपूजा।

तारा तारादिपञ्चार्णा तारान्यावेद वीर्यजा।
तारातारहितावर्णा ताराद्याताररूपिणी ॥ ११ ॥

तारारात्रिसमुत्पन्ना तारारात्रिवरोद्यता।
तारारात्रिजपासक्ता तारारात्रिस्वरूपिणी ॥ १२ ॥

ताराराज्ञीस्वसन्तुष्टा ताराराज्ञीवरप्रदा।
ताराराज्ञीस्वरूपा च ताराराज्ञीप्रसिद्धिदा ॥ १३ ॥

ताराहृत्पङ्कजागारा ताराहृत्पङ्कजापरा।
ताराहृत्पङ्कजाधारा ताराहृत्पङ्कजा तथा ॥ १४ ॥

तारेश्वरी च ताराभा तारागणस्वरूपिणी ।
तारागणसमाकीर्णा तारागणनिषेविता ॥ १५ ॥

तारा तारान्विता तारारत्नान्वितविभूषणा ।
तारागणरणासन्ना ताराकृत्यप्रपूजिता ॥ १६ ॥

तारागणकृताहारा तारागणकृताश्रया ।
तारागणकृतागारा तारागणनतत्परा ॥ १७ ॥

तारागुणगणाकीर्णा तारागुणगणप्रदा ।
तारागुणगणासक्ता तारागुणगणालया ॥ १८ ॥

तारेश्वरी तारपूज्या ताराजप्या तु तारणा ।
तारमुख्या तु ताराख्या तारदक्षा तु तारिणी ॥ १९ ॥

तारागम्या तु तारस्था तारामृततरङ्गिणी ।
तारभव्या तु तारार्णा तारहव्या तु तारिणी ॥ २० ॥

तारका तारकान्तस्स्था तारकाराशिभूषणा ।
तारकाहारशोभाढ्या तारकावेष्टिताङ्गणा ॥ २१ ॥

तारकाहंसकाकीर्णा तारकाकृतभूषणा ।
तारकाङ्गदशोभाङ्गी तारकाश्रितकङ्कणा ॥ २२ ॥

तारकाश्रितकाञ्ची च तारकान्वितभक्षणा ।
तारकाचित्रवसना तारकासनमण्डला ॥ २३ ॥

तारकाकीर्णमुकुटा तारकाश्रितकुण्डला ।
तारकान्वितताटङ्कयुग्मगण्डस्थलोज्ज्वला ॥ २४ ॥

तारकाश्रितपादाब्जा तारकावरदायिका ।
तारकादत्तहृदया तारकाश्रितसायका ॥ २५ ॥

तारकान्यासकुशला तारकान्यासविग्रहा ।
तारकान्याससन्तुष्टा तारकान्याससिद्धिदा ॥ २६ ॥

तारकान्यासनिलया तारकान्यासपूजिता ।
तारकान्याससंहृष्टा तारकान्याससिद्धिदा ॥ २७ ॥

तारकान्याससंमग्ना तारकान्यासवासिनी ।
तारकान्याससम्पूर्णमन्त्रसिद्धिविधायिनी ॥ २८ ॥

तारकोपासकप्राणा तारकोपासकप्रिया ।
तारकोपासकासाध्या तारकोपासकेष्टदा ॥ २९ ॥

तारकोपासकासक्ता तारकोपासकार्थिनी ।
तारकोपासकाराध्या तारकोपासकाश्रया ॥ ३० ॥

तारकासुरसन्तुष्टा तारकासुरपूजिता ।
तारकासुरनिर्माणकर्त्री तारकवन्दिता ॥ ३१ ॥

तारकासुरसम्मान्या तारकासुरमानदा ।
तारकासुरसंसिद्धा तारकासुरदेवता ॥ ३२ ॥

तारकासुरदेहस्था तारकासुरस्वर्गदा ।
तारकासुरसंसृष्टा तारकासुरगर्वदा ॥ ३३ ॥

तारकासुरसंहन्त्री तारकासुरमर्दिनी ।
तारकासुरसङ्ग्रामनर्त्तकी तारकापहा ॥ ३४ ॥

तारकासुरसङ्ग्रामकारिणी तारकारिभृत् ।
तारकासुरसङ्ग्रामकबन्धवृन्दवन्दिता ॥ ३५ ॥

तारकारिप्रसूस्तारकारिमाता तु तारिका ।
तारकारिमनोहारिवस्त्रभूषानुशासिका ॥ ३६ ॥

तारकारिविधात्री च तारकारिनिषेविता ।
तारकारिवचस्तुष्टा तारकारिसुशिक्षिता ॥ ३७ ॥

तारकारिसुसन्तुष्टा तारकारिविभूषिता ।
तारकारिकृतोत्सङ्गी तारकारिप्रहर्षदा ॥ ३८ ॥

तमःसम्पूर्णसर्वाङ्गी तमोलिप्तकलेवरा ।
तमोव्याप्तस्थलासङ्गा तमःपटलसन्निभा ॥ ३९ ॥

तमोहन्त्री तमःकर्त्री तमःसञ्चारकारिणी ।
तमोगात्री तमोदात्री तमःपात्री तमोपहा ॥ ४० ॥

तमोराशिस्तमोनाशा तमोराशिविनाशिनी ।
तमोराशिकृतध्वंसी तमोराशिभयङ्करी ॥ ४१ ॥

तमोगुणप्रसन्नास्या तमोगुणसुसिद्धिदा ।
तमोगुणोक्तमार्गस्था तमोगुणविराजिता ॥ ४२ ॥

तमोगुणस्तुतिपरा तमोगुणविवर्धिनी ।
तमोगुणाश्रितपरा तमोगुणविनाशिनी ॥ ४३ ॥

तमोगुणक्षयकरी तमोगुणकलेवरा ।
तमोगुणध्वंसतुष्टा तमःपारे प्रतिष्ठिता ॥ ४४ ॥

तमोभवभवप्रीता तमोभवभवप्रिया ।
तमोभवभवश्रद्धा तमोभवभवाश्रया ॥ ४५ ॥

तमोभवभवप्राणा तमोभवभवार्चिता ।
तमोभवभवप्रत्यालीढकुम्भस्थलस्थिता ॥ ४६ ॥

तपस्विबृन्दसन्तुष्टा तपस्विबृन्दपुष्टिदा ।
तपस्विबृन्दसंस्तुत्या तपस्विबृन्दवन्दिता ॥ ४७ ॥

तपस्विबृन्दसम्पन्ना तपस्विबृन्दहर्षदा ।
तपस्विबृन्दसम्पूज्या तपस्विबृन्दभूषिता ॥ ४८ ॥

तपस्विचित्ततल्पस्था तपस्विचित्तमध्यगा ।
तपस्विचित्तचित्तार्हा तपस्विचित्तहारिणी ॥ ४९ ॥

तपस्विकल्पवल्ल्याभा तपस्विकल्पपादपी ।
तपस्विकामधेनुश्च तपस्विकामपूर्तिदा ॥ ५० ॥

तपस्वित्राणनिरता तपस्विगृहसंस्थिता ।
तपस्विगृहराजश्रीस्तपस्विराज्यदायिका ॥ ५१ ॥

तपस्विमानसाराध्या तपस्विमानदायिका ।
तपस्वितापसंहर्त्री तपस्वितापशान्तिकृत् ॥ ५२ ॥

तपस्विसिद्धिविद्या च तपस्विमन्त्रसिद्धिकृत् ।
तपस्विमन्त्रतन्त्रेशी तपस्विमन्त्ररूपिणी ॥ ५३ ॥

तपस्विमन्त्रनिपुणा तपस्विकर्मकारिणी ।
तपस्विकर्मसम्भूता तपस्विकर्मसाक्षिणी ॥ ५४ ॥

तपस्सेव्या तपोभव्या तपोभाव्या तपस्विनी ।
तपोवश्या तपोगम्या तपोगेहनिवासिनी ॥ ५५ ॥

तपोधन्या तपोमान्या तपःकन्या तपोवृता ।
तपस्तथ्या तपोगोप्या तपोजप्या तपोऽनृता ॥ ५६ ॥

तपस्साध्या तपोराध्या तपोवन्द्या तपोमयी ।
तपस्सन्ध्या तपोवन्ध्या तपस्सान्निध्यकारिणी ॥ ५७ ॥

तपोध्येया तपोगेया तपस्तप्ता तपोबला ।
तपोलेया तपोदेया तपस्तत्त्वफलप्रदा ॥ ५८ ॥

तपोविघ्नवरघ्नी च तपोविघ्नविनाशिनी।
तपोविघ्नचयध्वंसी तपोविघ्नभयङ्करी॥ ५९॥

तपोभूमिवरप्राणा तपोभूमिपतिस्तुता।
तपोभूमिपतिध्येया तपोभूमिपतीष्टदा॥ ६०॥

तपोवनकुरङ्गस्था तपोवनविनाशिनी।
तपोवनगतिप्रीता तपोवनविहारिणी॥ ६१॥

तपोवनफलासक्ता तपोवनफलप्रदा।
तपोवनसुसाध्या च तपोवनसुसिद्धिदा॥ ६२॥

तपोवनसुसेव्या च तपोवननिवासिनी।
तपोधनसुसंसेव्या तपोधनसुसाधिता॥ ६३॥

तपोधनसुसंलीना तपोधनमनोमयी।
तपोधननमस्कारा तपोधनविमुक्तिदा॥ ६४॥

तपोधनधनासाध्या तपोधनधनात्मिका।
तपोधनधनाराध्या तपोधनफलप्रदा॥ ६५॥

तपोधनधनाढ्या च तपोधनधनेश्वरी।
तपोधनधनप्रीता तपोधनधनालया॥ ६६॥

तपोधनजनाकीर्णा तपोधनजनाश्रया।
तपोधनजनाराध्या तपोधनजनप्रसूः॥ ६७॥

तपोधनजनप्राणा तपोधनजनेष्टदा।
तपोधनजनासाध्या तपोधनजनेश्वरी॥ ६८॥

तरुणासृकप्रपानार्ता तरुणासृक्प्रतर्पिता।
तरुणासृक्समुद्रस्था तरुणासृक्प्रहर्षदा॥ ६९॥

तरुणासृक्सुसन्तुष्टा तरुणासृग्विलेपिता ।
तरुणासृङ्नदीप्राणा तरुणासृग्विभूषणा ॥ ७० ॥

तरुणैणबलिप्रीता तरुणैणबलिप्रिया ।
तरुणैणबलिप्राणा तरुणैणबलीष्टदा ॥ ७१ ॥

तरुणाजबलिप्रीता तरुणाजबलिप्रिया ।
तरुणाजबलिघ्राणा तरुणाजबलिप्रभुक् ॥ ७२ ॥

तरुणादित्यसङ्काशा तरुणादित्यविग्रहा ।
तरुणादित्यरुचिरा तरुणादित्यनिर्मला ॥ ७३ ॥

तरुणादित्यनिलया तरुणादित्यमण्डला ।
तरुणादित्यललिता तरुणादित्यकुण्डला ॥ ७४ ॥

तरुणार्कसमज्योत्स्ना तरुणार्कसमप्रभा ।
तरुणार्कप्रतीकाशा तरुणार्कप्रवर्धिता ॥ ७५ ॥

तरुणारुणनेत्रा च तरुणारुणलोचना ।
तरुणारुणगात्रा च तरुणारुणभूषणा ॥ ७६ ॥

तरुणीदत्तसङ्केता तरुणीदत्तभूषणा ।
तरुणीगणसन्तुष्टा तरुणी तरुणीमणिः ॥ ७७ ॥

तरुणीमणिसंसेव्या तरुणीमणिवन्दिता ।
तरुणीमणिसन्तुष्टा तरुणीमणिपूजिता ॥ ७८ ॥

तरुणीबृन्दसंवन्द्या तरुणीबृन्दवन्दिता ।
तरुणीबृन्दसंस्तुत्या तरुणीबृन्दमानदा ॥ ७९ ॥

तरुणीबृन्दमध्यस्था तरुणीबृन्दवेष्टिता ।
तरुणीबृन्दसम्प्रीता तरुणीबृन्दभूषिता ॥ ८० ॥

तरुणीजपसंसिद्धा तरुणीजपमोक्षदा।
तरुणीपूजकासक्ता तरुणीपूजकार्थिनी॥ ८१॥

तरुणीपूजकश्रीदा तरुणीपूजकार्तिहा।
तरुणीपूजकप्राणा तरुणीनिन्दकार्तिदा॥ ८२॥

तरुणीकोटिनिलया तरुणीकोटिविग्रहा।
तरुणीकोटिमध्यस्था तरुणीकोटिवेष्टिता॥ ८३॥

तरुणीकोटिदुस्साध्या तरुणीकोटिविग्रहा।
तरुणीकोटिरुचिरा तरुणी तरुणीश्वरी॥ ८४॥

तरुणीमणिहाराढ्या तरुणीमणिकुण्डला।
तरुणीमणिसन्तुष्टा तरुणीमणिमण्डिता॥ ८५॥

तरुणीसरणीप्रीता तरुणीसरणीरता।
तरुणीसरणीस्थाना तरुणीसरणीमता॥ ८६॥

तरणीमण्डलश्रीदा तरणीमण्डलेश्वरी।
तरणीमण्डलश्रद्धा तरणीमण्डलस्थिता॥ ८७॥

तरणीमण्डलाघ्याढ्या तरणीमण्डलार्चिता।
तरणीमण्डलध्येया तरणीभवसागरा॥ ८८॥

तरणीकारणासक्ता तरणीतक्षकार्चिता।
तरणीतक्षकश्रीदा तरणीतक्षकार्थिनी॥ ८९॥

तरी तरणशीला च तरीतरणतारिणी।
तरीतरणसंवेद्या तरीतरणकारिणी॥ ९०॥

तरुरूपा तरूपस्था तरुस्तरुलतामयी।
तरुरूपा तरुस्था च तरुमध्यनिवासिनी॥ ९१॥

तप्तकाञ्चनगेहस्था तप्तकाञ्चनभूमिका ।
तप्तकाञ्चनप्राकारा तप्तकाञ्चनपादुका ॥ ९२ ॥

तप्तकाञ्चनदीप्ताङ्गी तप्तकाञ्चनसन्निभा ।
तप्तकाञ्चनगौराङ्गी तप्तकाञ्चनमञ्चगा ॥ ९३ ॥

तप्तकाञ्चमवस्त्राढ्या तप्तकाञ्चनरूपिणी ।
तप्तकाञ्चनमध्यस्था तप्तकाञ्चनकारिणी ॥ ९४ ॥

तप्तकाञ्चनमासार्च्या तप्तकाञ्चनपात्रभुक् ।
तप्तकाञ्चनशैलस्था तप्तकाञ्चनकुण्डला ॥ ९५ ॥

तप्तकाञ्चनक्षेत्राढ्या तप्तकाञ्चनदण्डधृक् ।
तप्तकाञ्चनभूषाढ्या तप्तकाञ्चनदानदा ॥ ९६ ॥

तप्तकाञ्चनदेशेशी तप्तकाञ्चनचापधृक् ।
तप्तकाञ्चनतूणाढ्या तप्तकाञ्चनबाणभृत् ॥ ९७ ॥

तलातलविधात्री च तलातलविधायिनी ।
तलातलस्वरूपेशी तलातलविहारिंणी ॥ ९८ ॥

तलातलजनासाध्या तलातलजनेश्वरी ।
तलातलजनाराध्या तलातलजनार्थदा ॥ ९९ ॥

तलातलजयाभाक्षी तलातलजचञ्चला ।
तलातलजरत्नाढ्या तलातलजदेवता ॥ १०० ॥

तटिनीस्थानरसिका तटिनीतटवासिनी ।
तटिनी तटिनीतीरगामिनी तटिनीप्रिया ॥ १०१ ॥

तटिनीप्लवनप्रीता तटिनीप्लवनोद्यता ।
तटिनीप्लवनश्लाघ्या तटिनीप्लवनार्थदा ॥ १०२ ॥

तटलास्या तटस्थाना तटेशी तटवासिनी ।
तटपूज्या तटाराध्या तटरोममुखार्थिनी ॥ १०३ ॥

तटजा तटरूपा च तटस्था तटचञ्चला ।
तटसन्निधिगेहस्थासहिता तटशायिनी ॥ १०४ ॥

तरङ्गिणी तरङ्गाभा तरङ्गायतलोचना ।
तरङ्गसमदुर्धर्षा तरङ्गसमचञ्चला ॥ १०५ ॥

तरङ्गसमदीर्घाङ्गी तरङ्गसमवर्धिता ।
तरङ्गसमसंवृद्धिस्तरङ्गसमनिर्मला ॥ १०६ ॥

तडागमध्यनिलया तडागमध्यसम्भवा ।
तडागरचनश्लाघ्या तडागरचनोद्यता ॥ १०७ ॥

तडागकुमुदामोदी तडागेशी तडागिनी ।
तडागनीरसंस्नाता तडागनीरनिर्मला ॥ १०८ ॥

तडागकमलागारा तडागकमलालया ।
तडागकमलान्तस्स्था तडागकमलोद्यता ॥ १०९ ॥

तडागकमलाङ्गी च तडागकमलानना ।
तडागकमलप्राणा तडागकमलेक्षणा ॥ ११० ॥

तडागरक्तपद्मस्था तडागश्वेतपद्मगा ।
तडागनीलपद्माभा तडागनीलपद्मभृत् ॥ १११ ॥

तनुस्तनुगता तन्वी तन्वङ्गी तनुधारिणी ।
तनुरूपा तनुगता तनुधृक् तनुरूपिणी ॥ ११२ ॥

तनुस्था तनुमध्याङ्गी तनुकृत्तनुमङ्गला ।
तनुसेव्या तु तनुजा तनुजातनुसम्भवा ॥ ११३ ॥

तनुभृत्तनुसम्भूता तनुदा तनुकारिणी।
तनुभृत्तनुसंहन्त्री तनुसञ्चारकारिणी॥ ११४॥

तथ्यवाक् तथ्यवचना तथ्यकृत् तथ्यवादिनी।
तथ्यभृत्तथ्यचरिता तथ्यधर्मानुवर्तिनी॥ ११५॥

तथ्यभुक् तथ्यगमना तथ्यभक्तिवरप्रदा।
तथ्यनीचेश्वरी तथ्यचित्ताचाराशुसिद्धिदा॥ ११६॥

तर्क्या तर्क्यस्वभावा च तर्कदा या तु तर्ककृत्।
तर्काध्यापनमध्यस्था तर्काध्यापनकारिणी॥ ११७॥

तर्काध्यापनसन्तुष्टा तर्काध्यापनरूपिणी।
तर्काध्यापनसंशीला तर्कार्थप्रतिपादिता॥ ११८॥

तर्काध्यापनसन्तृप्ता तर्कार्थप्रतिपादिका।
तर्कवादाश्रितपदा तर्कवादविवर्धिनी॥ ११९॥

तर्कवादैकनिपुणा तर्कवादप्रचारिणी।
तमालदलश्यामाङ्गी तमालदलमालिनी॥ १२०॥

तमालवनसङ्केता तमालपुष्पपूजिता।
तगरी तगराराध्या तगरार्चितपादुका॥ १२१॥

तगरस्रक्सुसन्तुष्टा तगरस्रग्विराजिता।
तगराहुतिसन्तुष्टा तगराहुतिकीर्त्तिदा॥ १२२॥

तगराहुतिसंसिद्धा तगराहुतिमानदा।
तडित्तडिल्लताकारा तडिच्चञ्चललोचना॥ १२३॥

तडिल्लता तडित्तन्वी तडिद्दीप्ता तडित्प्रभा।
तद्रूपा तत्स्वरूपेशी तन्मयी तत्त्वरूपिणी॥ १२४॥

तत्स्थानदाननिरता तत्कर्मफलदायिनी ।
तत्त्वकृत् तत्त्वदा तत्त्वा तत्त्ववित् तत्त्वतर्पिता ।। १२५ ।।

तत्त्वार्च्या तत्त्वपूज्या च तत्त्वार्घ्या तत्त्वरूपिणी ।
तत्त्वज्ञानप्रदानेशी तत्त्वज्ञानसुमोक्षदा ।। १२६ ।।

त्वरिता त्वरितप्रीता त्वरितार्तिविनाशिनी ।
त्वरितासवसन्तुष्टा त्वरितासवतर्पिता ।। १२७ ।।

त्वग्वस्त्रा त्वक्परीधाना तरला तरलेक्षणा ।
तरक्षुचर्मवसना तरक्षुत्वग्विभूषणा ।। १२८ ।।

तरक्षुस्तरक्षुप्राणा तरक्षुपृष्ठगामिनी ।
तरक्षुपृष्ठसंस्थाना तरक्षुपृष्ठवासिनी ।। १२९ ।।

तर्पितोदैस्तर्पणाशा तर्पणासक्तमानसा ।
तर्पणानन्दहृदया तर्पणाधिपतिस्तुतिः ।। १३० ।।

त्रयीमयी त्रयीसेव्या त्रयीपूज्या त्रयीकथा ।
त्रयीभव्या त्रयीभाव्या त्रयीहव्या त्रयीयुता ।। १३१ ।।

त्र्यक्षरी त्र्यक्षरेशानी त्र्यक्षरीशीघ्रसिद्धिदा ।
त्र्यक्षरेशी त्र्यक्षरीस्था त्र्यक्षरीपुरुषास्पदा ।। १३२ ।।

तपना तपनेष्टा च तपस्तपनकन्यका ।
तपनांशुसमासह्या तपनकोटिकान्तिकृत् ।। १३३ ।।

तपनीया तल्पगता तल्पा तल्पविधायिनी ।
तल्पकृत्तल्पगा तल्पदात्री तल्पतलाश्रया ।। १३४ ।।

तपनीयतलारात्री तपनीयांशुप्रार्थिनी ।
तपनीयप्रदा तप्ता तपनीयाद्रिसंस्थिता ।। १३५ ।।

तल्पेशी तल्पदा तल्पसंस्थिता तल्पवल्लभा ।
तल्पप्रिया तल्परता तल्पनिर्माणकारिणी ॥ १३६ ॥

तरसापूजनासक्ता तरसावरदायिनी ।
तरसासिद्धिसन्धात्री तरसामोक्षदायिनी ॥ १३७ ॥

तापसी तापसाराध्या तापसार्तिविनाशनी ।
तापसार्ता तापसश्रीस्तापसप्रियवादिनी ॥ १३८ ॥

तापसानन्दहृदया तापसानन्ददायिनी ।
तापसाश्रितपादाब्जा तापसासक्तमानसा ॥ १३९ ॥

तामसी तामसीपूज्या तामसीप्रणयोत्सुका ।
तामसी तामसीप्रीता तामसीशीघ्रसिद्धिदा ॥ १४० ॥

तालेशी तालभुक् तालदात्री तालोपमस्तनी ।
तालवृक्षस्थिता तालवृक्षजा तालरूपिणी ॥ १४१ ॥

तार्क्ष्या तार्क्ष्यसमारूढा तार्क्ष्येशी तार्क्ष्यपूजिता ।
तार्क्ष्येश्वरी तार्क्ष्यमाता तार्क्ष्येशीवरदायिनी ॥ १४२ ॥

तापी तु तपिनी तापसंहन्त्री तापनाशिनी ।
तापदात्री तापकर्त्री तापविध्वंसकारिणी ॥ १४३ ॥

त्रासकर्त्री त्रासदात्री त्रासहर्त्री च त्रासहा ।
त्रासिता त्रासरहिता त्रासनिर्मूलकारिणी ॥ १४४ ॥

त्राणकृत्त्राणसंशीला तानेशी तानदायिनी ।
तानगानरता तानकारिणी तानगायिनी ॥ १४५ ॥

तारुण्यामृतसम्पूर्णा तारुण्यामृतवारिधिः ।
तारुण्यामृतसंतुष्टा तारुण्यामृततर्पिता ॥ १४६ ॥

तारुण्यामृतपूर्णाङ्गी तारुण्यामृतविग्रहा।
तारुण्यगुणसम्पन्ना तारुण्योक्तिविशारदा॥ १४७॥

ताम्बूली ताम्बुलेशानी ताम्बूलचर्वणोद्यता।
ताम्बूलपूरितास्या च ताम्बूलारुणिताधरा॥ १४८॥

ताटङ्करत्नविख्य तिस्ताटङ्करत्नभूषिणी।
ताटङ्करत्नमध्यस्था ताटङ्कद्वयभूषिता॥ १४९॥

तिथीशा तिथिसम्पूज्या तिथिस्था तिथिरूपिणी।
तिथित्रितयवास्तव्या तिथीशवरदायिनी॥ १५०॥

तिलोत्तमादिकाराध्या तिलोत्तमादिकप्रभा।
तिलोत्तमा तिलप्रेक्षा तिलाराध्या तिलार्चिता॥ १५१॥

तिलभुक् तिलसन्दात्री तिलतुष्टा तिलालया।
तिलदा तिलसङ्काशा तिलतैलविधायिनी॥ १५२॥

तिलतैलोपलिप्ताङ्गी तिलतैलसुगन्धिनी।
तिलाज्यहोमसन्तुष्टा तिलाज्यहोमसिद्धिदा॥ १५३॥

तिलपुष्पाञ्जलिप्रीता तिलपुष्पाञ्जलिप्रिया।
तिलपुष्पाञ्जलिश्रेष्ठा तिलपुष्पाभनासिनी॥ १५४॥

तिलकाश्रितसिन्दूरा तिलकाङ्कितचन्दना।
तिलकाहृतकस्तूरी तिलकामोदमोहिनी॥ १५५॥

त्रिगुणा त्रिगुणाकारा त्रिगुणान्वितविग्रहा।
त्रिगुणाकारविख्याता त्रिमूर्तिस्त्रिगुणात्मिका॥ १५६॥

त्रिशिरास्त्रिपुरेशानी त्रिपुरा त्रिपुरेश्वरी।
त्रिपुरेशी त्रिलोकस्था त्रिपुरी त्रिपुराम्बिका॥ १५७॥

त्रिपुरारिसमाराध्या त्रिपुरारिवरप्रदा ।
त्रिपुरारिशिरोभूषा त्रिपुरारिसुखप्रदा ॥ १५८ ॥

त्रिपुरारीष्टसन्दात्री त्रिपुरारीष्टदेवता ।
त्रिपुरारिकृतार्धाङ्गी त्रिपुरारिविलासिनी ॥ १५९ ॥

त्रिपुरासुरसंहन्त्री त्रिपुरासुरमर्दिनी ।
त्रिपुरासुरसंसेव्या त्रिपुरासुरवर्यपा ॥ १६० ॥

त्रिकूटा त्रिकुटाराध्या त्रिकूटार्चितविग्रहा ।
त्रिकूटाचलमध्यस्था त्रिकूटाचलवासिनी ॥ १६१ ॥

त्रिकूटाचलसञ्जाता त्रिकूटाचलनिर्गता ।
त्रिजटा त्रिजटेशानी त्रिजटावरदायिनी ॥ १६२ ॥

त्रिनेत्रेशी त्रिनेत्रा च त्रिनेत्रवरवर्णिनी ।
त्रिवली त्रिवलीयुक्ता त्रिशूलवरधारिणी ॥ १६३ ॥

त्रिशूलेशी त्रिशूलीशी त्रिशूलभृत् त्रिशूलिनी ।
त्रिमनुस्त्रिमनूपास्या त्रिमनूपासकेश्वरी ॥ १६४ ॥

त्रिमनुजपसन्तुष्टा त्रिमनोस्तूर्णसिद्धिदा ।
त्रिमनुपूजनप्रीता त्रिमनुध्यानमोक्षदा ॥ १६५ ॥

त्रिविधा त्रिविधाभक्तिस्त्रिमता त्रिमतेश्वरी ।
त्रिभावस्था त्रिभावेशी त्रिभावपरिपूरिता ॥ १६६ ॥

त्रितत्त्वात्मा त्रितत्त्वेशी त्रितत्त्वज्ञा त्रितत्त्वधृक् ।
त्रितत्त्वाचमनप्रीता त्रितत्त्वाचमनेष्टदा ॥ १६७ ॥

त्रिकोणस्था त्रिकोणेशी त्रिकोणचक्रवासिनी ।
त्रिकोणचक्रमध्यस्था त्रिकोणबिन्दुरूपिणी ॥ १६८ ॥

त्रिकोणयन्त्रसंस्थाना त्रिकोणयन्त्ररूपिणी।
त्रिकोणयन्त्रसम्पूज्या त्रिकोणयन्त्रसिद्धिदा ॥ १६९ ॥

त्रिवर्णाढ्या त्रिवर्णेशी त्रिवर्णोपासिरूपिणी।
त्रिवर्णस्था त्रिवर्णाढ्या त्रिवर्णवरदायिनी ॥ १७० ॥

त्रिवर्णाद्या त्रिवर्णार्च्या त्रिवर्गफलदायिनी।
त्रिवर्गाढ्या त्रिवर्गेशी त्रिवर्गाद्यफलप्रदा ॥ १७१ ॥

त्रिसन्ध्यार्च्या त्रिसन्ध्येशी त्रिसन्ध्याराधनेष्टदा।
त्रिसन्ध्यार्चनसन्तुष्टा त्रिसन्ध्याजपमोक्षदा ॥ १७२ ॥

त्रिपदाराधितपदा त्रिपदा त्रिपदेश्वरी।
त्रिपदाप्रतिपाद्येशी त्रिपदाप्रतिपादिका ॥ १७३ ॥

त्रिशक्तिश्च त्रिशक्तीशी त्रिशक्तेष्टफलप्रदा।
त्रिशक्तेष्टा त्रिशक्तीष्टा त्रिशक्तिपरिवेष्टिता ॥ १७४ ॥

त्रिवेणी च त्रिवेणीस्त्री त्रिवेणीमाधवार्चिता।
त्रिवेणीजलसन्तुष्टा त्रिवेणीस्नानपुण्यदा ॥ १७५ ॥

त्रिवेणीजलसंस्नाता त्रिवेणीजलरूपिणी।
त्रिवेणीजलपूताङ्गी त्रिवेणीजलपूजिता ॥ १७६ ॥

त्रिनाडीस्था त्रिनाडीशी त्रिनाडीमध्यगामिनी।
त्रिनाडीसन्ध्यसञ्ज्ञेया त्रिनाडी च त्रिकोटिनी ॥ १७७ ॥

त्रिपञ्चाशत्त्रिरेखा च त्रिशक्तिपथगामिनी।
त्रिपथस्था त्रिलोकेशी त्रिकोटिकुलमोक्षदा ॥ १७८ ॥

त्रिरामेशी त्रिरामार्च्या त्रिरामवरदायिनी।
त्रिदशाश्रितपादाब्जा त्रिदशालयचञ्चला ॥ १७९ ॥

त्रिदशा त्रिदशप्रार्थ्या त्रिदशाशुवरप्रदा ।
त्रिदशैश्वर्यसम्पन्ना त्रिदशेश्वरसेविता ॥ १८० ॥

त्रियामार्च्या त्रियामेशी त्रियामानन्तसिद्धिदा ।
त्रियामेशाधिकज्योत्स्ना त्रियामेशाधिकानना ॥ १८१ ॥

त्रियामानाथवत्सौम्या त्रियामानाथभूषणा ।
त्रियामानाथलावण्य रत्नकोटियुतानना ॥ १८२ ॥

त्रिकालस्था त्रिकालज्ञा त्रिकालज्ञत्वकारिणी ।
त्रिकालेशी त्रिकालार्च्या त्रिकालज्ञत्वदायिनी ॥ १८३ ॥

तीरभुक् तीरगा तीरसरिता तीरवासिनी ।
तीरभुग्देशसञ्जाता तीरभुग्देशसंस्थिता ॥ १८४ ॥

तिग्मा तिग्मांशुसङ्काशा तिग्मांशुक्रोडसंस्थिता ।
तिग्मांशुकोटिदीप्ताङ्गी तिग्मांशुकोटिविग्रहा ॥ १८५ ॥

तीक्ष्णा तीक्ष्णतरा तीक्ष्णमहिषासुरमर्दिनी ।
तीक्ष्णकर्त्रीलसत्पाणिस्तीक्ष्णासिवरधारिणी ॥ १८६ ॥

तीव्रा तीव्रगतिस्तीव्रासुरसङ्घविनाशिनी ।
तीव्राष्टनागाभरणा तीव्रमुण्डविभूषणा ॥ १८७ ॥

तीर्थात्मिका तीर्थमयी तीर्थेशी तीर्थपूजिता ।
तीर्थराजेश्वरी तीर्थफलदा तीर्थदानदा ॥ १८८ ॥

तुमुली तुमुलप्राज्ञी तुमुलासुरघातिनी ।
तुमुलक्षतजप्रीता तुमुलाङ्गणनर्तकी ॥ १८९ ॥

तुरगी तुरगारूढा तुरङ्गपृष्ठगामिनी ।
तुरङ्गगमनाह्लादा तुरङ्गवेगगामिनी ॥ १९० ॥

तुरीया तुलना तुल्या तुल्यवृत्तिस्तु तुल्यकृत्।
तुलनेशी तुलाराज्ञी तुलाराज्ञीत्वसूक्ष्मवित्॥ १९१ ॥

तुम्बिका तुम्बिकापात्रभोजना तुम्बिकार्थिनी।
तुलसी तुलसीवर्या तुलजा तुलजेश्वरी॥ १९२ ॥

तुषाग्निव्रतसन्तुष्टा तुषाग्निस्तुषराशिकृत्।
तुषारकरशीताङ्गी तुषारकरपूर्त्तिकृत्॥ १९३ ॥

तुषाराद्रिस्तुषाराद्रिसुता तुहिनदीधितिः।
तुहिनाचलकन्या च तुहिनाचलवासिनी॥ १९४ ॥

तुर्यवर्गेश्वरी तुर्यवर्गदा तुर्यवेददा।
तुर्यवर्यात्मिका तुर्या तुर्येश्वरस्वरूपिणी॥ १९५ ॥

तुष्टिदा तुष्टिकृत् तुष्टिस्तूणीरद्वयपृष्ठधृक्।
तुम्बुराज्ञानसन्तुष्टा तुष्टसंसिद्धिदायिनी॥ १९६ ॥

तूर्णराज्यप्रदा तूर्णगद्गदा तूर्णपद्यदा।
तूर्णपाण्डित्यसन्दात्री तूर्णा तूर्णबलप्रदा॥ १९७ ॥

तृतीया च तृतीयेशी तृतीयातिथिपूजिता।
तृतीयाचन्द्रचूडेशी तृतीयाचन्द्रभूषणा॥ १९८ ॥

तृप्तिस्तृप्तिकरी तृप्ता तृष्णा तृष्णाविवर्धिनी।
तृष्णापूर्णकरी तृष्णानाशिनी तृषिता तृषा॥ १९९ ॥

त्रेतासंसाधिता त्रेता त्रेतायुगफलप्रदा।
त्रैलोक्यपूज्या त्रैलोक्यदात्री त्रैलोक्यसिद्धिदा॥ २०० ॥

त्रैलोक्येश्वरतादात्री त्रैलोक्यपरमेश्वरी।
त्रैलोक्यमोहनेशानी त्रैलोक्यराज्यदायिनी॥ २०१ ॥

तैत्रिशाखेश्वरी तैत्रिशाखा तैत्रविवेकदा ।
तोरणान्वितगेहस्था तोरणासक्तमानसा ॥ २०२ ॥

तोलकास्वर्णसन्दात्री तोलकास्वर्णकङ्कणा ।
तोमरायुधरूपा च तोमरायुधधारिणी ॥ २०३ ॥

तौर्यत्रिकेश्वरी तौर्यत्रिकी तौर्यत्रिकोत्सुकी ।
तन्त्रकृत्तन्त्रवत्सूक्ष्मा तन्त्रमन्त्रस्वरूपिणी ॥ २०४ ॥

तन्त्रकृत्तन्त्रसम्पूज्या तन्त्रेशी तन्त्रसम्मता ।
तन्त्रज्ञा तन्त्रवित्तन्त्रसाध्या तन्त्रस्वरूपिणी ॥ २०५ ॥

तन्त्रस्था तन्त्रजा तन्त्री तन्त्रभृत्तन्त्रमन्त्रदा ।
तन्त्राद्या तन्त्रगा तन्त्रा तन्त्राच्या तन्त्रसिद्धिदा ॥ २०६ ॥

(तन्त्रविज्ञा तन्त्ररता तन्त्रगोप्याऽथ तान्त्रिकी ।
तारस्वरेण महिता तन्त्राचारफलप्रदा ॥)

इति ते कथितं दिव्यं क्रतुकोटिफलप्रदम् ।
नाम्नां सहस्रं तारायास्तकाराद्यं सुगोपितम् ॥ २०७ ॥

दानं यज्ञस्तपस्तीर्थं व्रतञ्चानशनादिकम् ।
एकैकनामजं पुण्यं सन्ध्यातुर्गदितं मया ॥ २०८ ॥

गुरौ देवे तथा मन्त्रे यस्य स्यान्निश्चला मतिः ।
तस्यैव स्तोत्रपाठेऽस्मिन्सम्भवेदधिकारिता ॥ २०९ ॥

महाचीनक्रमाभिन्नषोढान्यस्तकलेवरः ।
क्रमदीक्षान्वितो मन्त्री पठेदेतन्न चान्यथा ॥ २१० ॥

गन्धपुष्पादिभिर्द्रव्यैर्मकारैः पञ्चकैर्द्विजः ।
सम्पूज्य तारां विधिवत्पठेदेतदनन्यधीः ॥ २११ ॥

अष्टम्याश्च चतुर्दश्यां सङ्क्रान्तौ रविवासरे ।
शनिभौमदिने रात्रौ ग्रहणे चन्द्रसूर्ययोः ॥ २१२ ॥

तारारात्रौ कालरात्रौ मोहरात्रौ विशेषतः ।
पठनान्मन्त्रसिद्धिः स्यात्सर्वज्ञत्वं प्रजायते ॥ २१३ ॥

श्मशाने प्रान्तरे रम्ये शून्यागारे विशेषतः ।
देवागारे गिरौ वापि स्तवपारायणं चरेत् ॥ २१४ ॥

राज्यं देयं धनं देयं शिरो देयमथापि वा ।
न देयं स्तोत्रवर्यन्तु मन्त्रादपि महोद्यतम् ॥ २१५ ॥

अनुलोमविलोमाभ्यां मूलसम्पुटितन्त्विदम् ।
लिखित्वा भूर्जपत्रादौ गन्धाष्टकपुरस्सरैः ॥ २१६ ॥

धारयेद्दक्षिणे बाहौ कण्ठे वामभुजे तथा ।
तस्य सर्वार्थसिद्धिस्स्याद्वह्निना नैव दह्यते ॥ २१७ ॥

तद्गात्रं शस्त्रसङ्घैश्च भिद्यते न कदाचन ।
स भूमिवलये पुत्र विचरेद्भैरवोपमः ॥ २१८ ॥

वन्ध्यापि लभते पुत्रं निर्धनो धनमाप्नुयात् ।
निर्विघ्नो लभते विद्यां तर्कव्याकरणादिकाम् ॥ २१९ ॥

इति निगदितमस्यास्तादिनाम्नां सहस्रं
वरदमनुनिदानं दिव्यसाम्राज्यसंज्ञम् ।
विधिहरिगिरिशादौ शक्तिदानैकदक्षं
समविधि पठनीयं कालितारासमज्ञैः ॥ २२० ॥

इति श्रीब्रह्मयामले तारायास्तकारादिसहस्रनामस्तोत्रं सम्पूर्णम् ॥

# श्रीतारासहस्रनामस्तोत्रम्

कैलासनगरे देवं महादेवं महेश्वरम्।
भवानी रहसि प्रीत्या पप्रच्छ वरदायकम्॥ १॥

देव्युवाच—

कथमीशान सर्वज्ञ लभन्ते शक्तिमुत्तमाम्।
साधकाः सर्वदा येन तन्मे कथय सुप्रभो॥ २॥

ईश्वर उवाच

विना पूजां विना ध्यानं विना जपं विना बलिम्।
लभन्ते येन कल्याणि तन्मे निगदितं शृणु॥ ३॥

नाम्नां सहस्रं तारायाः कथयिष्याम्यशेषतः।
शृणु देवि सदा भक्त्या भक्तानां परमं हितम्॥ ४॥

विना पूजोपचारेण विना जपेन यत् फलम्।
तत् फलं सकलं देवि कथयिष्यामि तच्छृणु॥ ५॥

तारा रात्रिर्महारात्रिः कालरात्रिः कपालिनी।
कालिका कामदा माया महामाया महोत्सवा॥ १॥

महादानरता यज्ञा यज्ञोत्सवविभूषिता।
चन्द्रवक्त्रा चकोराक्षी चारुनेत्रा सुलोचना॥ २॥

त्रिनेत्रा पद्मपत्राक्षी कुरङ्गाक्षी मनोहरा।
ब्राह्मी नारायणी ज्योत्स्ना चारुकेशी सुलोचना॥ ३॥

वाराही वारुणी विद्या महाविद्या महेश्वरी।
पिङ्गा कुञ्चितकेशी च महायज्ञस्वरूपिणी॥ ४॥

गौरी चम्पकवर्णा च कृशाङ्गी कुलपूजिता ।
सर्वानन्दस्वरूपा च सर्वसङ्कटतारिणी ॥ ५ ॥

नित्या नित्यमयी नन्दा भद्रा नीलसरस्वती ।
गायत्री सुचरित्रा च कौलव्रतपरायणा ॥ ६ ॥

हिरण्यगर्भा भूगर्भा विश्वगर्भा यशस्विनी ।
हिमवत्तनया दिव्या दिव्याम्बरविभूषणा ॥ ७ ॥

जगन्माता जगद्धात्री जगतामुपकारिणी ।
ऐन्द्री सौम्या तथा याम्या वारुणी वायवी तथा ॥ ८ ॥

आग्नेयी नैर्ऋती चैव ऐशानी चण्डिकाऽम्बिका ।
सुमेरुतनया वन्द्या सर्वेषामुपकारिणी ॥ ९ ॥

ललज्जिह्वा सरोजाक्षी मुण्डस्रजविभूषणा ।
सर्वानन्दमयी सर्वा सर्वानन्दस्वरूपिणी ॥ १० ॥

धृतिर्मेधा तथा लक्ष्मीः श्रद्धा पन्नगशायिनी ।
रुक्मिणी जानकी दुर्गा सत्या सत्यवती रतिः ॥ ११ ॥

कामाख्या मोक्षदा नन्दा नारसिंही सरस्वती ।
महादेवरता चण्डी चण्डदोर्दण्डखण्डिनी ॥ १२ ॥

दीर्घकेशी सुकेशी च पिङ्गकेशी महाकचा ।
भवानी भवपत्नी च भक्तभीतिहरा शची ॥ १३ ॥

पौरन्दरी तथा विष्णोर्जाया माहेश्वरी परा ।
सर्वेषां जननी नित्या चार्वङ्गी दैत्यनाशिनी ॥ १४ ॥

घोररूपा महेशानी कामिनी वरवर्णिनी ।
महाविद्या महामाया महामेधा महोत्सवा ॥ १५ ॥

विरूपा विश्वरूपा च मृडानी मृडवल्लभा।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥ १६ ॥

कोटिचन्द्रप्रतीकाशा शतसूर्यसमप्रभा।
जह्नुकन्या मनोज्ञा च पार्वती हरवल्लभा ॥ १७ ॥

कामरूपा महेशानी नित्योत्साहा मनस्विनी।
वैकुण्ठनाथपत्नी च तथा शङ्करवल्लभा ॥ १८ ॥

काश्यपी कमला कृष्णा कञ्जपत्रायतेक्षणा।
माहेश्वरी वृषारूढा पूर्णचन्द्रनिभानना ॥ १९ ॥

मान्या मानवती धन्या कन्या हिमगिरेः सुता।
अपर्णा पद्मपत्राक्षी नागयज्ञोपवीतिनी ॥ २० ॥

महाशङ्खधरा कान्ता कमनीया नगात्मजा।
ब्रह्माणी वैष्णवी शम्भोर्जाया गङ्गा जलेश्वरी ॥ २१ ॥

भागीरथी मनो बुद्धिर्नित्यानन्दमयी सदा।
हरप्रिया गिरिसुता हरपत्नी तपस्विनी ॥ २२ ॥

महाव्याधिहरा देवी शुम्भासुरनिषूदिनी।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥ २३ ॥

शङ्खिनी चक्रिणी धात्री हस्ते पुस्तकधारिणी।
चामुण्डा चपला तुङ्गा भद्रा दैत्यनिकृन्तनी ॥ २४ ॥

शान्तिर्निद्रा महानिद्रा गुह्यनिद्रा च रेणुका।
कौमारी कुलजा कुब्जी कौलव्रतपरायणा ॥ २५ ॥

नवदुर्गा सदाचारा द्रौपदी द्रुपदात्मजा।
सृष्टिः सर्वाद्यकालीना निशुम्भप्राणनाशिनी ॥ २६ ॥

पद्मिनी वसुधा पृथ्वी रोहिणी बिन्ध्यवासिनी।
शिवा शक्तिर्महाशक्तिः शाङ्करी शक्तिवल्लभा॥ २७॥

दैत्यप्राणहरा दात्री दया दामोदरप्रिया।
क्षान्तिः क्षेमकरी बुद्धिर्बौद्धाचारपरायणा॥ २८॥

श्रीविद्या भैरवी भव्या भारती भयनाशिनी।
तापसी तारिणी तीक्ष्णा तीक्ष्णदैत्यविनाशिनी॥ २९॥

दात्री दानपरा काली दुर्गा दैत्यविनाशिनी।
पद्मा पद्मावती हृष्टा तुष्टा पुष्टा तथोर्वशी॥ ३०॥

वज्रिणी वज्रहस्ता च तथा नारायणी शिवा।
खण्डिनी खड्गहस्ता च कर्त्तृखर्परधारिणी॥ ३१॥

देवाङ्गना देवमान्या देवकन्या पुलोमजा।
स्रग्विणी स्रग्वदात्री च सर्वसौख्यविवर्धिनी॥ ३२॥

शीला शीलवती सूक्ष्मा सूक्ष्माकारा वरप्रदा।
वरेण्या वरदा वाणी ज्ञानिनी ज्ञानदाऽमला॥ ३३॥

उग्रकाली महाकाली भद्रकाली च दक्षिणा।
भृगुवंशसमुद्भूता भार्गवी भृगुवल्लभा॥ ३४॥

शूलिनी शूलहस्ता च मयूरवरवाहना।
महामांसरता रक्ता रक्तखर्परधारिणी॥ ३५॥

रक्ताम्बरधराऽनामा रमणी सुरनायिका।
परमानन्ददा ज्येष्ठा योगिनीगणसेविता॥ ३६॥

अम्बा जाम्बवती सत्या सत्यभामा नगात्मजा।
रौद्री रौद्रस्वना रौद्रा रौद्रदैत्यविनाशिनी॥ ३७॥

कुमारी कौशिकी विद्या कालदैत्यविनाशिनी ।
शम्भुपत्नी शम्भुरता शम्भुजाया महोदरी ।। ३८ ।।

शिवपत्नी शिवरता शिवजायाम्बिका तथा ।
हरपत्नी हररता हरजाया च शूलिनी ।। ३९ ।।

मदनान्तककान्ता च मदनान्तकवल्लभा ।
गिरिजा गिरिकन्या च गिरिशस्य च वल्लभा ।। ४० ।।

भूतभव्या भवा पुष्टा पावनी परिपालिनी ।
अदृश्याऽव्यक्तरूपा च इष्टा स्वेष्टप्रवर्धिनी ।। ४१ ।।

अच्युता प्रच्युता प्राणा प्राणदा वासवेश्वरी ।
अपांनिधिसमुद्भूता धारिणी च प्रतिष्ठिता ।। ४२ ।।

उद्भवा क्षोभणा क्षेमा श्रीगर्भा परमेश्वरी ।
कराला पुष्टदेहा च कारिणी कञ्जलोचना ।। ४३ ।।

शरण्या कमला प्रीता विमलाऽऽनन्दवर्धिनी ।
कपर्दिनी कल्पनाभा सुमनानन्दवर्धिनी ।। ४४ ।।

उदीर्णभूषणा भव्या सुरसेना सुरेश्वरी ।
श्रीमती शिशिरानन्दा शिशिराचलकन्यका ।। ४५ ।।

सुरमान्या सुरश्रेष्ठा ज्येष्ठा प्राणेश्वरी स्थिरा ।
तमोघ्नी ध्वांतसंहन्त्री प्रयतात्मा पवित्रिता ।। ४६ ।।

प्रद्योतिनी रथारूढा सर्वलोकप्रकाशिनी ।
मेधाविनी महावीर्या हंसी संसारतारिणी ।। ४७ ।।

प्रणतप्राणिनामार्त्तिहारिणी दैत्यनाशिनी ।
डाकिनी शाकिनी शीला वरखट्वाङ्गधारिणी ।। ४८ ।।

कौमुदी कुमुदा कुन्दा कौलिका कुलजात्मजा।
गर्विता गुणसम्पन्ना नगजा खगवाहिनी॥ ४९॥

चन्द्रानना महोग्रा च चारुमूर्धजशोभिता।
मनोज्ञा माधवी मान्या माननीया महद्गुणा॥ ५०॥

ज्येष्ठा मघा च पुष्या च धनिष्ठा पूर्वफाल्गुनी।
रक्तबीजादिहन्त्री च रक्तबीजविनाशिनी॥ ५१॥

चण्डमुण्डारिहन्त्री च चण्डमुण्डविनाशिनी।
कर्त्री हर्त्री सुकर्त्री च विमलामलवाहिनी॥ ५२॥

निर्मला भास्करी भीमा महिषासुरघातिनी।
कालिन्दी यमुना वृद्धा युवती बालिका तथा॥ ५३॥

कौसल्या कौमुदी माद्री कन्धती चाप्यरुन्धती।
पुरारिगृहिणी पूर्णा पूर्णरूपा यशस्विनी॥ ५४॥

सम्पूर्णचन्द्रवदना बालचन्द्रसमप्रभा।
रेवती रमणी चित्रा विचित्राम्बरभूषणा॥ ५५॥

वीणा वीणावती विद्या यशोदा च यशस्विनी।
नवपुष्पसमुद्भूता नवपुष्पासवोत्सुका॥ ५६॥

नवपुष्पस्रजा माला माल्यभूषणशोभिता।
नवपुष्पसमप्राणा नवपुष्पसमुत्सुका॥ ५७॥

नवपुष्पात्मका पुष्पा पुष्पस्रजविभूषणा।
नवपुष्पगुणोपेता नवपुष्पोपशोभिता॥ ५८॥

नवपुष्पप्रिया प्रीता प्रेममण्डलमध्यगा।
कुलशास्त्रप्रदीप्ता च कुलमार्गप्रवर्धिनी॥ ५९॥

श्मशानभैरवी कालभैरवी भैरवीप्रिया ।
आनन्दभैरवी ध्यानभैरवी पुरभैरवी ॥ ६० ॥

महाभैरवपत्नी च भैरवी लोकभैरवी ।
सुविद्याभैरवी नीतिभैरवी गुणभैरवी ॥ ६१ ॥

सम्मोहभैरवी पुष्टिभैरवी तुष्टिभैरवी ।
सृष्टिस्थितिभैरवी च भैरवी स्थितिभैरवी ॥ ६२ ॥

पुण्डरीकाक्षगृहिणी पुण्डरीकाक्षवल्लभा ।
आनन्दसुन्दरी वीरसुन्दरी स्थितिसुन्दरी ॥ ६३ ॥

आनन्दसुन्दरी कालसुन्दरी पुरसुन्दरी ।
या माया सुन्दरी सौम्या सुन्दरी लोकसुन्दरी ॥ ६४ ॥

या विद्यासुन्दरी नीतिसुन्दरी गुणसुन्दरी ।
मल्लिकाहाररसिका मल्लिकाहारशोभिता ॥ ६५ ॥

नवचम्पकवर्णाभा नागकेशरशोभिता ।
जपाकुसुमसङ्काशा जपाकुसुमशोभिता ॥ ६६ ॥

प्रिया प्रियङ्करी विष्णोर्दानवेन्द्रविनाशिनी ।
ज्ञानेश्वरी ज्ञानदात्री ज्ञानानन्दप्रदायिनी ॥ ६७ ॥

गुणगौरवसम्पन्ना गुणशीलसमन्विता ।
रूपयौवनसम्पन्ना रूपयौवनशोभिता ॥ ६८ ॥

गुणाश्रया गुणवती गुणगौरवसुन्दरी ।
लसत्तारापतिप्रख्या ताटङ्कद्वयशोभिता ॥ ६९ ॥

वृक्षमूलस्थिता देवी वृक्षशाखोपरिस्थिता ।
वृक्षमध्याग्रनिलया वृक्षमध्यनिवासिनी ॥ ७० ॥

कुमुद्वती कुमुदिनी कुमुदा कुमुदाकरा।
कुसुम्भरूपरुचिरा कुसुम्भारुणमस्तका॥ ७१॥

स्वयम्भूपुष्पसङ्काशा स्वयम्भूपुष्पधारिणी।
स्वयम्भूपुष्पसरसा मग्ना-ध्यानवती सदा॥ ७२॥

शुक्रप्रिया शुक्ररता शुक्रमज्जनतत्परा।
पर्णाऽपर्णा सुपर्णा च निष्पन्ना पापनाशिनी॥ ७३॥

मदिरा मोदसम्पन्ना मदिरामोदधारिणी।
सर्वाश्रया सर्वगुणाऽऽनन्दकन्दलकारिणी॥ ७४॥

नारीपुष्पसमप्राणा नारीपुष्पसमुत्सुका।
नारीपुष्पोत्सवा नारी नारीपुष्परता मृगी॥ ७५॥

चतुर्भुजा दशभुजा अष्टादशभुजा तथा।
द्विभुजा षड्भुजाष्टारपङ्कजोपरिसंस्थिता॥ ७६॥

कौबेरी कौरवी कौर्व्या कुरुकुल्ला कपालिनी।
विपरी कदलीजङ्घा रम्भोरू रामवल्लभा॥ ७७॥

निशाचरी निशामूर्तिर्निशा चन्द्रसमप्रभा।
चान्द्री चन्द्रकला चन्द्रा चारुचन्द्रसमप्रभा॥ ७८॥

स्रोतस्विनी स्रोतवती सर्वदुःखार्तिनाशिनी।
सर्वाधारा सर्वमयी सर्वानन्दप्रवर्धिनी॥ ७९॥

सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी सदा।
सहस्रनयनप्राणा सहस्रनयनप्रिया॥ ८०॥

सहस्रशीर्षा सुसमा सदम्भा सर्वभक्षिका।
षष्टिका षट्सुचक्रस्था षड्वर्गफलदायिनी॥ ८१॥

षड्विंशपद्ममध्यस्था षड्विंशदलमध्यगा।
हकारवर्णनिलया हकाराक्षरभूषिता॥ ८२॥

हारिणी हारवनिता हारहीरकशोभिता।
ह्रींकारबीजसहिता ह्रींकारैरुपशोभिता॥ ८३॥

कन्दर्पस्य कला कुल्या कौलिनी कुलतर्पिता।
केतकीकुसुमप्राणा केतकीकृतभूषणा॥ ८४॥

केतकीकुसुमासक्ता केतकीपरिभूषिता।
कर्पूरपूर्णवदना कलानाथसमप्रभा॥ ८५॥

कला केलिप्रिया कीर्णकदम्बकुसुमोत्सुका।
कादम्बिनी करिगतिः कुञ्जरेश्वरगामिनी॥ ८६॥

खर्वा च खञ्जनद्वन्द्वलोचना खड्गभूषिता।
खद्योत इव दुर्लक्ष्या खद्योत इव चञ्चला॥ ८७॥

गया गदा गुणप्रीता गीतवाद्यप्रिया गतिः।
गणेश्वरी गणेज्या च गणपूज्या गणप्रदा॥ ८८॥

गुणाढ्या गुणसम्पत्तिर्गुणदात्री गुणात्मिका।
गुर्वी गुरुतरा गौरी गाणपत्यफलप्रदा॥ ८९॥

घर्मांशुगृहिणी घर्मा धर्मसिन्धुनिवासिनी।
घर्घरा घोरवदना घोरदैत्यविनाशिनी॥ ९०॥

घोषा घोषवती घोष्या घोषपुत्री घनालया।
चर्वरी चारुनयना चारुवक्त्रा चतुर्गुणा॥ ९१॥

चतुर्वेदमयी पूर्ण-चन्द्रास्या चतुरानना।
चलच्चकोरनयना चलत्खञ्जनलोचना॥ ९२॥

चलदम्भोजवदना चलदम्भोजशोभिता ।
छात्री छत्रप्रिया छत्रा छत्रचामरशोभिता ॥ ९३ ॥

छिन्ना छर्दिछिन्नशिरा छिन्ननासा छलान्विता ।
छलाद्या छलसन्त्रस्ता छलरूपा छलच्छिरा ॥ ९४ ॥

छकारवर्णनिलया छकाराद्या छलप्रिया ।
छद्मिनी छद्मनिरता छद्मा छद्मनिवासिनी ॥ ९५ ॥

जगन्नाथप्रिया जीवा जगन्नाथरता जरा ।
जीर्णा जीमूतवनिता जीमूतैरुपशोभिता ॥ ९६ ॥

जामातृवरदा जृम्भा जमलार्जुनधारिणी ।
जरा जरान्विता जृम्भा जम्भारातिवरप्रदा ॥ ९७ ॥

जिता जयित्री जयदा जयदात्री जयप्रदा ।
झल्लरा झीतूकृतिर्झिल्ली झरी झर्झरिका तथा ॥ ९८ ॥

टाङ्कारकारिणी टीत्कारिणी टङ्कधारिणी ।
ठक्कुराज्ञा डमरुकरा डात्कारी डमरुप्रिया ॥ ९९ ॥

ढक्कारवाद्यढक्कारी तुलसी तालभक्षिका ।
तुला तौलिनिका तीर्णा तारा तारिणिका तथा ॥ १०० ॥

तन्त्रविज्ञा तन्त्ररता तन्त्रविद्या च तन्त्रदा ।
तान्त्रिका तन्त्रगोप्या च तन्त्रसारा च तन्त्रपा ॥ १०१ ॥

तन्त्रधात्री तन्त्रकारी तन्त्रनारीरतातुरा ।
तपःप्रभावा तन्त्रज्ञा तन्त्रसारफलप्रदा ॥ १०२ ॥

तपस्या तौलिनी तार्त्ती तार्त्तीया तुलसी तुषा ।
तुषारकरपूर्णास्या तुषारकरमण्डिता ॥ १०३ ॥

तुहिनांशुसमाभासा तुहिनांशुसमप्रभा ।
तुषारकरतुल्याङ्गी तुषारकरसुन्दरी ॥ १०४ ॥

तुषारधामतुल्यास्या तुषारांशुसमानना ।
तुहिनाद्रिसुता तार्क्षा तालाङ्गी तालवर्जिता ॥ १०५ ॥

तारस्वरेण सहिता तारस्वरविभूषिता ।
थकारकूटनिलया थकाराक्षरमालिनी ॥ १०६ ॥

दयावती दीनरता दुःखदारिद्र्यनाशिनी ।
दौर्भाग्यदुःखदलिनी दौर्भाग्यापदनाशिनी ॥ १०७ ॥

दुहिता दीनबन्धुश्च दानवेन्द्रविमर्दिनी ।
दानदात्री दानपरा दानसम्मानतोषिता ॥ १०८ ॥

दाल्भ्यादिसेविता दान्ता दामोदरपरायणा ।
दधीचिवरदा दुष्टा दानवेन्द्रविनाशिनी ॥ १०९ ॥

दीर्घनेत्रा दीर्घकचा दीर्घनासा च दीर्घिका ।
दारिद्र्यदुःखशमनी दुष्टासुरनिषूदिनी ॥ ११० ॥

दम्भिका दम्भहा दम्भा दनुजेन्द्रविनाशिनी ।
धनधान्यप्रदा धन्या धनेश्वरवरप्रदा ॥ १११ ॥

धर्मिणी धार्मिका धर्म्या धर्माधर्मप्रवर्धिनी ।
धर्मेश्वरी धर्मदात्री धर्मानन्दप्रवर्धिनी ॥ ११२ ॥

धनाध्यक्षा धनप्रीता धनाढ्या धनतोषिता ।
धीरा धैर्यवती धृष्णा धवलाम्भोजसन्निभा ॥ ११३ ॥

धरिणी धारिणी धात्री धुरीणा धवलास्पदा ।
धार्मिका धर्मसहिता धर्मनिन्दकवर्जिता ॥ ११४ ॥

नवीना निरजा निम्ना निम्ननाभिर्नगेश्वरी ।
नूतनाम्भोजनयना नवीनाम्भोजसुन्दरी ॥ ११५ ॥

नागरी नागराजेज्या नागराजसुता नगा ।
नागराजपतिर्नग्ना नागराजविभूषिता ॥ ११६ ॥

नगेश्वरी नगारूढा नगराजकुलेश्वरी ।
नवीनेन्दुकलानन्दा नन्दिकेश्वरवल्लभा ॥ ११७ ॥

नीरजा नीरजाक्षी च नीरजद्वन्द्वलोचना ।
नीरसूता नीरभवा नीरनिर्मलदेहिनी ॥ ११८ ॥

नागयज्ञोपवीताढ्या नागयज्ञोपवीतिका ।
नागकेसरसन्तुष्टा नागकेसरमालिनी ॥ ११९ ॥

नवीनकेतकीकुन्दमन्दारस्रजभूषिता ।
नायिका नायकप्रीता नायकप्रेमतोषिता ॥ १२० ॥

नायकप्रेमसहिता नायकप्रेमपोषिता ।
नायकानन्दनिलया नायकानन्दकारिणी ॥ १२१ ॥

नर्मकर्मरता निद्रा नर्मकर्मपरायणा ।
नर्मकर्मप्रिया नर्मा नर्मधर्मपरायणा ॥ १२२ ॥

नर्मप्रीता नर्मरता नर्मध्यानपरायणा ।
नर्मकर्मैकसहिता नर्मकर्मैकपालिका ॥ १२३ ॥

नरनारीगुणप्रीता नरनारीवरप्रदा ।
नारायणप्रिया निष्का निष्कवर्णा नकारहा ॥ १२४ ॥

पुष्पप्रिया पुष्परता पौष्पीपानपरायणा ।
पुष्पप्रीता च पुष्पेज्या पुष्पदामविभूषणा ॥ १२५ ॥

पुण्यदा पूर्णिमा पुण्या पुण्यकोटिफलप्रदा ।
पुराणागमवेद्या च पुराणागमगोपिता ॥ १२६ ॥

पुराणागमगोप्या च पुराणागमतोषिता ।
पुराणगोचरा पूर्वा पूर्णा प्रौढविनाशिनी ॥ १२७ ॥

प्रह्लादहृदयाह्लादगेहिनी पुण्यचारिणी ।
फाल्गुनी फाल्गुनप्रीता फाल्गुनप्रेमधारिणी ॥ १२८ ॥

फल्गुफलप्रदा चैव फणिराजविभूषिता ।
फणाकारा फणिप्रीता फणिहारविभूषिता ॥ १२९ ॥

फणीशकृतसर्वाङ्गभूषणा फणिवाहिनी ।
फणिप्रीता फणिरता फणिकङ्कणधारिणी ॥ १३० ॥

फलदात्री फलासक्ता फलाभरणभूषिता ।
फकारकूटसर्वाङ्गी फाल्गुनानन्दवर्धिनी ॥ १३१ ॥

वासुदेवरता विज्ञा विज्ञविज्ञानकारिणी ।
वीणावती बलाकीर्णा बालपीयूषरोचिषा ॥ १३२ ॥

बाला वसुमती विद्या विद्याहारविभूषिता ।
विद्यावती वैद्यपदाप्रीता वैवस्वती बलिः ॥ १३३ ॥

वाणी विलासकरणी वराङ्गस्था वरानना ।
विष्णोर्वक्षःस्थलस्था च वाग्वती विन्ध्यगेहिनी ॥ १३४ ॥

निवारतरुसंस्था च नीवारकुसुमोत्सुका ।
भीतिहा भयदा भानोरंशुजालसमप्रभा ॥ १३५ ॥

भार्गवेज्या भृगोः पूज्या भारद्वाजनमस्कृता ।
भीतिहा भयसम्पन्ना भीमाकाराभ्रसुन्दरी ॥ १३६ ॥

मायाधरी मानरता मानसम्मानतत्परा ।
माधवानन्ददा माध्वी मदिरा मदिरेक्षणा ॥ १३७ ॥

महोत्साहगुणोपेता महती महदद्भुता ।
मदिरामोदरमिता मदिरामज्जने रता ॥ १३८ ॥

यशोधरी यशोविद्या यशोदानन्दवर्धिनी ।
यशःकर्पूरधवला यशोदामविभूषणा ॥ १३९ ॥

यमराजस्वसा योगमार्गानन्दप्रवर्धिनी ।
यादवानन्दकरिणी यादवानन्दवर्धिनी ॥ १४० ॥

यज्ञप्रीता यज्ञमयी यज्ञकर्मविभूषणा ।
रामप्रिया रामरता रामतोषणतत्परा ॥ १४१ ॥

राज्ञी राजकुलेज्या च राजराजेश्वरी रमा ।
रमणी रामणी रम्या रामानन्दप्रदायिनी ॥ १४२ ॥

रजनीकरपूर्णास्या रक्तोत्पलविलोचना ।
लाङ्गली प्रेमसन्तुष्टा लाङ्गलीप्रणयप्रिया ॥ १४३ ॥

लाक्षारुणा च ललना लीला लीलावती लया ।
लङ्केश्वरगुणप्रीता लङ्केशवरदायिनी ॥ १४४ ॥

लवङ्गकुसुमप्रीता लवङ्गकुसुमस्रजा ।
बाला विवस्वद्गृहिणी विवस्वत्प्रेमधारिणी ॥ १४५ ॥

शबला शरला शल्या शरण्या श्रीः शरद्गुणा ।
षट्कोणचक्रमध्यस्था सम्पदा ह्रीविशोभिता ॥ १४६ ॥

क्षेमा अम्बा तथाज्ञा च इडा ईश्वरवल्लभा ।
उग्राख्या च तथा चोर्णा ऋकारा ॠस्वरोद्भवा ॥ १४७ ॥

लृकारवर्णकूटस्था लृकारस्वरभूषिता ।
एकारवर्णकूटस्था एकारस्वरभूषिता ॥ १४८ ॥

एष्या चैष्या तथा चोषा औकाराक्षररूपिणी ।
अंसा अःकारवनिता सर्वागमसुगोपिता ॥ १४९ ॥

य इदं पठते स्तोत्रं प्रत्यहं भक्तिसंयुतः ।
दिवा रात्रौ तथा सन्ध्यासमये स महेश्वरः ॥ १५० ॥

स्तवमात्रस्य पाठेन राजा किङ्करतामियात् ।
सर्वागमेषु पूज्यः स्यात् सर्वतन्त्रे स्वयं हरः ॥ १५१ ॥

शिवस्थाने च शय्यायां शून्यागारे चतुष्पथे ।
यः पठेच्छृणुयाद् वापि स योगी नात्र संशयः ॥ १५२ ॥

सिन्दूरकरवीराद्यैः पुष्पैर्लोहितकैः शुभाम् ।
योऽर्चयेद् भक्तिभावेन तस्यासाध्यं न किञ्चन ॥ १५३ ॥

वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ।
वह्नेः शैत्यं करोत्येष स्तवस्यास्य च कीर्तनात् ॥ १५४ ॥

यः पठेच्छृणुयाद् वापि एकचित्तेन सर्वदा ।
स दीर्घायुः सुखी वाग्मी वाणी तस्य वशङ्करी ॥ १५५ ॥

सर्वतीर्थाभिषेकेन गयाश्राद्धेन यत् फलम् ।
तत् फलं सकलं तस्य यः पठेदेकचित्ततः ॥ १५६ ॥

येषामाराधने श्रद्धा ये च साधितुमुद्यताः ।
तेषां कृतार्थं सर्वत्र गतिर्देवि पदालये ॥ १५६ ॥

ऋतुयुक्तलतामध्ये स्थित्वा दण्डेन ताडयेत् ।
जप्त्वा स्तुत्वा च भक्त्या च गच्छेद्वै तारिकापदम् ॥ १५८ ॥

अष्टम्यां च चतुर्दश्यां नवम्यां शनिवासरे।
संक्रान्तौ मङ्गले रात्रावमावस्यायां योऽर्चयेत्॥ १५९॥

वर्षं वाप्य तु देवेशि तस्याधीनाश्च सिद्धयः।
मृतपुत्रा च या नारी मृतगर्भा च याऽङ्गना॥ १६०॥

मृतापत्या च या नारी दौर्भाग्यपदपीडिता।
बन्ध्या च काकवन्ध्या च मृतपुत्रा च याऽङ्गना॥ १६१॥

धनधान्यविहीना च रोगशोकाकुला च या।
ताभिरेतन् महादेवि भूर्जपत्रे लिखापयेत्॥ १६२॥

सव्ये भुजे च बध्नीयात् सर्वसौख्यवती भवेत्।
एवं पुमानपि प्रायो दुःखेन परिपीडितः॥ १६३॥

सभायां व्यसने घोरे विवादे शत्रुसङ्कटे।
चतुरङ्गे तथा युद्धे सर्वत्रापदपीडिते॥ १६४॥

स्मरणादस्य कल्याणि संक्षयं यान्ति दूरतः।
पूजनीया प्रयत्नेन शून्यागारे शिवालये॥ १६५॥

बिल्ववृक्षतले देवि सर्वदा कुलमण्डलैः।
शर्करासवसंयुक्तैर्दुग्धैर्देवि सतण्डुलैः॥ १६६॥

अपूप-पिष्ट-संयुक्तैर्नैवेद्यैश्च यथोचितैः।
निवेदितं च यद् द्रव्यं भोक्तव्यं चावधानतः॥ १६७॥

अनेनैव विधानेन योऽर्चयेत् परमेश्वरीम्।
स भूमिमण्डले देवि साक्षादीशो न संशयः॥ १६८॥

महाशङ्खेन कल्याणि सर्वं कार्यं जपादिकम्।
कुलसर्वस्वकस्यैव प्रभावो वर्णितो मया॥ १६९॥

न शक्यते समाख्यातुं वर्षकोटिशतैरपि
किञ्चिन्मयापि चापल्यात् कथितं परमेश्वरि ॥ १७० ॥

जन्मान्तरसहस्रेण कथितुं नैव शक्यते ।
कुलीनाय प्रदातव्यं ताराभक्तिपराय च ॥ १७१ ॥

महात्मने सदा देयं परीक्षितगुणाय च ।
नाभक्ताय प्रदातव्यं पन्थान्तररताय च ॥ १७२ ॥

न देयं देवदेवेशि गोप्यं सर्वागमे सदा ।
पठनीयं सदा देवि सर्वावस्थासु सर्वदा ॥ १७३ ॥

यः स्तोत्रं कुलनामकं प्रतिदिनं भक्त्या पठेन्मानवः
स स्याद् वित्तचयैर्धनेश्वरसमो विद्याभवैर्वाक्पतिः ।
सौन्दर्येण च मूर्तिमान् मनसिजः कीर्त्या च शीतद्युतिः ।
शक्त्या शङ्कर एव शौर्यविभवैर्भूमेः पतिर्नान्यथा ॥ १७४ ॥

॥ इति श्रीतारायाः कुलसर्वस्वं नाम सहस्रनामस्तोत्रं समाप्तम् ॥

# श्री षोडशी (त्रिपुरसुन्दरी) ध्यानम्

१. बालार्कमण्डलाभासां चतुर्बाहां त्रिलोचनाम् ।
पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥

२. बालार्कायुततेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं
नानालंकृति राजमानवपुषं बालोडुराट्शेखराम् ।
हस्तैरिक्षुधनुः सृणिं सुमशरं पाशं मुदा बिभ्रतीं
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधार भूतां भजे ॥

# श्री षोडशीशतनामस्तोत्रम्

भृगुरुवाच ॥

चतुर्वक्त्र जगन्नाथ स्तोत्रं वद मयि प्रभो ।
यस्यानुष्ठानमात्रेण नरो भक्तिमवाप्नुयात् ॥ १ ॥

ब्रह्मोवाच ॥

सहस्रनाम्नामाकृष्य नाम्नामष्टोत्तरं शतम् ।
गुह्याद् गुह्यतरं गुह्यं सुन्दर्याः परिकीर्तितम् ॥ २ ॥

अस्य श्रीषोडश्यष्टोत्तरशतनामस्तोत्रस्य शम्भुर्ऋषिः अनुष्टुप्छन्दः,
श्रीषोडशी देवता, धर्मार्थकाममोक्षसिद्धये विनियोगः ।

ॐ त्रिपुरा षोडशी माता त्र्यक्षरा त्रितया त्रयी ।
सुन्दरी सुमुखी सेव्या सामवेदपरायणा ॥ ३ ॥

शारदा शब्दनिलया सागरा सरिदंबरा ।
शुद्धा शुद्धतनुस्साध्वी शिवध्यानपरायणा ॥ ४ ॥

स्वामिनी शम्भुवनिता शाम्भवी च सरस्वती ।
समुद्रमथिनी शीघ्रगामिनी शीघ्रसिद्धिदा ॥ ५ ॥

साधुसेव्या साधुगम्या साधुसन्तुष्टमानसा ।
खट्वाङ्गधारिणी खर्वा खड्गखर्परधारिणी ॥ ६ ॥

षड्वर्गभावरहिता षड्वर्गपरिचारिका ।
षड्वर्गा च षडङ्गा च षोढा षोडशवार्षिकी ॥ ७ ॥

क्रतुरूपा क्रतुमती ऋभुक्षक्रतुमण्डिता ।
कवर्गादि-पवर्गान्ता अन्तस्थानन्तरूपिणी ॥ ८ ॥

अकाराकाररहिता कालमृत्युजरापहा ।
तन्वी तत्त्वेश्वरी तारा त्रिवर्षा ज्ञानरूपिणी ॥ ९ ॥

काली कराली कामेशी च्छाया संज्ञाप्यरुन्धती ।
निर्विकल्पा महावेगा महोत्साहा महोदरी ॥ १० ॥

मेघा बलाका विमला विमलज्ञानदायिनी ।
गौरी वसुन्धरा गोप्त्री गवांपतिनिषेविता ॥ ११ ॥

भगाङ्गा भगरूपा च भक्तिभावपरायणा ।
छिन्नमस्ता महाधूमा तथा धूम्रविभूषणा ॥ १२ ॥

धर्मकर्मादिरहिता धर्मकर्मपरायणा ।
सीता मातङ्गिनी मेधा मधुदैत्यविनाशिनी ॥ १३ ॥

भैरवी भुवना माताऽभयदा भवसुन्दरी ।
भावुका बगला कृत्या बाला त्रिपुरसुन्दरी ॥ १४ ॥

रोहिणी रेवती रम्या रम्भा रावणवन्दिता ।
शतयज्ञमयी सत्त्वा शतक्रतुवरप्रदा ॥ १५ ॥

शतचन्द्रानना देवी सहस्रादित्यसन्निभा ।
सोमसूर्याग्निनयना व्याघ्रचर्माम्बरावृता ॥ १६ ॥

अर्धेन्दुधारिणी मत्ता मदिरा मदिरेक्षणा ।
इति ते कथितं गोप्यं नाम्नामष्टोत्तरं शतम् ॥ १७ ॥

सुन्दर्याः सर्वदं सेव्यं महापातकनाशनम् ।
गोपनीयं गोपनीयं गोपनीयं कलौ युगे ॥॥ १८ ॥

सहस्रनामपाठस्य फलं यद्वै प्रकीर्तितम् ।
तस्मात्कोटिगुणं पुण्यं स्तवस्यास्य प्रकीर्तनात् ॥ १९ ॥

पठेत्सदा भक्तियुतो नरो यो निशीथकालेऽप्यरुणोदये वा ।
प्रदोपकाले नवमीदिनेऽथवा लभेत भोगान्परमाद्भुतान् प्रियान् ॥ २० ॥

इति ब्रह्मयामले पूर्वखण्डे षोडश्यष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

# श्रीषोडशीसहस्रनामस्तोत्रम्

कैलासशिखरे रम्ये नानारत्नोपशोभिते ।
कल्पपादपमध्यस्थे नानापुष्पोपशोभिते ॥ १ ॥

मणिमण्डपमध्यस्थे मुनिगन्धर्वसेविते ।
तं कश्चित्सुखमासीनं भगवन्तं जगद्गुरुम् ॥ २ ॥

कपालखट्वाङ्गधरं चन्द्रार्धकृतशेखरम् ।
त्रिशूलडमरूहस्तं महावृषभवाहनम् ॥ ३ ॥

जटाजूटधरं देवं वासुकीकण्ठभूषणम् ।
विभूतिभूषणं देवं नीलकण्ठं त्रिलोचनम् ॥ ४ ॥

द्वीपिचर्मपरीधानं शुद्धस्फटिकसन्निभम् ।
सहस्रादित्यसङ्काशं गिरिजार्धाङ्गभूषणम् ॥ ५ ॥

प्रणम्य शिरसा नाथं कारणं विश्वरूपिणम् ।
कृताञ्जलिपुटो भूत्वा प्राहैनं शिखिवाहनः ॥ ६ ॥

कार्त्तिकेय उवाच —

देवदेव जगन्नाथ सृष्टिस्थितिलयात्मक ।
त्वमेव परमात्मा च त्वं गतिः सर्वदेहिनाम् ॥ ७ ॥

त्वं गतिस्सर्वलोकानां दीनानाञ्च त्वमेव हि ।
त्वमेव जगदाधारस्त्वमेष विश्वकारणम् ॥ ८ ॥

त्वमेव पूज्यस्सर्वेषां त्वदन्यो नास्ति मे गतिः ।
किं गुह्यं परमं लोके किमेकं सर्वसिद्धिदम् ॥ ९ ॥

किमेकं परमं श्रेष्ठं किं योगं स्वर्गमोक्षदम् ।
विना तीर्थेन तपसा विना दानैर्विना मखैः ॥ १० ॥

विना लयेन ध्यानेन नरः सिद्धिमवाप्नुयात् ।
कस्मादुत्पद्यते सृष्टिः कस्मिंश्च प्रलयो भवेत् ॥ ११ ॥

कस्मादुत्तीर्य्यते देव संसारार्णवसङ्कटात् ।
तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ॥ १२ ॥

ईश्वर उवाच ॥

साधु साधु त्वया पृष्टं पार्वतीप्रियनन्दन ।
अस्ति गुह्यतमं पुत्र कथयिष्याम्यसंशयम् ॥ १३ ॥

सत्त्वं रजस्तमश्चैव ये चान्ये महदादयः ।
ये चान्ये बहवो भूताः सर्वप्रकृतिसम्भवाः ॥ १४ ॥

सैव देवी पराशक्तिर्महात्रिपुरसुन्दरी ।
सैव प्रसूयते विश्वं विश्वं सैव प्रयास्यति ॥ १५ ॥

सैव संहरते विश्वं जगदेतच्चराचरम् ।
आधारस्सर्वभूतानां सैव रोगार्तिहारिणी ॥ १६ ॥

इच्छाज्ञानक्रियाशक्तिब्रह्मविष्णुशिवादयः ।
त्रिधा शक्तिस्वरूपेण सृष्टिस्थितिविनाशिनी ॥ १७ ॥

सृज्यते ब्रह्मरूपेण विष्णुरूपेण पाल्यते ।
संहरेद्रुद्ररूपेण जगदेतच्चराचरम् ॥ १८ ॥

यस्या योनौ जगत्सर्वमद्यापि परिवर्त्तते ।
यस्यां प्रलीयते चान्ते यस्याश्च जायते पुनः ॥ १९ ॥

यां समाराध्य त्रैलोक्यं सम्प्राप्तं पदमुत्तमम् ।
तस्या नामसहस्रन्तु कथयामि शृणुष्व तत् ॥ २० ॥

ॐ अस्य श्रीमहात्रिपुरसुन्दरीसहस्रनामस्तोत्रमन्त्रस्य श्रीभगवान् दक्षिणामूर्तिः ऋषिः, जगतीच्छन्दः, समस्तप्रकटगुप्तसम्प्रदायकुलकौलोत्तीर्णनिगर्भरहस्याचिन्त्यप्रभावती देवता । ॐबीजम्, माया शक्तिः, कामराजबीजं कीलकम्, जीवो बीजम्, सुषुम्ना नाडी, सरस्वती शक्तिः, धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥

ध्यानम्-

आधारे तरुणार्कबिम्बरुचिरं हेमप्रभं वाग्भवं
बीजं मन्मथमिन्द्रगोपसदृशं हृत्पङ्कजे संस्थितम् ॥
विष्णुब्रह्मपदस्थशक्तिकलितं सोमप्रभाभासुरं
ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सौख्यं पदम् ॥

कल्याणी कमला काली कराली कामरूपिणी ।
कामाख्या कामदा काम्या कामना कामचारिणी ॥ १ ॥

कालरात्रिर्महारात्रिः कपाली कालरूपिणी ।
कौमारी करुणा मुक्तिः कलिकल्मषनाशिनी ॥ २ ॥

कात्यायनी कराधारा कौमुदी कमलप्रिया ।
कीर्तिदा बुद्धिदा मेधा नीतिज्ञा नीतिवत्सला ॥ ३ ॥

माहेश्वरी महामाया महातेजा महेश्वरी ।
महाजिह्वा महाघोरा महादंष्ट्रा महाभुजा ॥ ४ ॥

महामोहान्धकारघ्नी महामोक्षप्रदायिनी ।
महादारिद्र्यनाशा च महाशत्रुविमर्दिनी ॥ ५ ॥

महामाया महावीर्या महापातकनाशिनी ।
महामखा मन्त्रमयी मणिपूरकवासिनी ॥ ६ ॥

मानसी मानदा मान्या मनश्चक्षुरगोचरा ।
गणमाता च गायत्री गणगन्धर्वसेविता ॥ ७ ॥

गिरिजा गिरिशा साध्वी गिरिस्था गिरिवल्लभा ।
चण्डेश्वरी चण्डरूपा प्रचण्डा चण्डमालिनी ॥ ८ ॥

चर्विका चर्चिकाकारा चण्डिका चारुरूपिणी ।
यज्ञेश्वरी यज्ञरूपा जपयज्ञपरायणा ॥ ९ ॥

यज्ञमाता यज्ञभोक्त्री यज्ञेशी यज्ञसम्भवा ।
सिद्धयज्ञक्रियासिद्धिर्यज्ञाङ्गी यज्ञरक्षिका ॥ १० ॥

यज्ञक्रिया यज्ञरूपा यज्ञाङ्गी यज्ञरक्षिका ।
यज्ञक्रिया च यज्ञा च यज्ञायज्ञाक्रियालया ॥ ११ ॥

जालन्धरी जगन्माता जातवेदा जगत्प्रिया ।
जितेन्द्रिया जितक्रोधा जननी जन्मदायिनी ॥ १२ ॥

गङ्गा गोदावरी चैव गोमती च शतद्रुका।
घर्घरा वेदगर्भा च रेचिका समवासिनी ॥ १३ ॥

सिन्धुर्मन्दाकिनी क्षिप्रा यमुना च सरस्वती।
भद्रा रागविपाशा च गण्डकी वि ध्यवासिनी ॥ १४ ॥

नर्मदा सिन्धुकावेरी वेत्रवत्या सुकौशिकी।
महेन्द्रतनया चैव अहल्या चर्मकावती ॥ १५ ॥

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारवती तीर्था महाकिल्बिषनाशिनी ॥ १६ ॥

पद्मिनी पद्ममध्यस्था पद्मकिञ्जल्कवासिनी।
पद्मवक्त्रा चकोराक्षी पद्मस्था पद्मसम्भवा ॥ १७ ॥

ह्रींङ्कारी कुण्डलाधारा हृत्पद्मस्था सुलोचनी।
श्रीङ्कारी भूषणा लक्ष्मीः क्लीङ्कारी क्लेशनाशिनी ॥ १८ ॥

हरिवक्त्रोद्भवा शान्ता हरिवक्त्रकृतालया।
हरिवक्त्रोद्भवा शान्ता हरिवक्षस्स्थलस्थिता ॥ १९ ॥

वैष्णवी विष्णुरूपा च विष्णुमातृस्वरूपिणी।
विष्णुमाया विशालाक्षी विशालनयनोज्ज्वला ॥ २० ॥

विश्वेश्वरी च विश्वात्मा विश्वेशी विश्वरूपिणी।
विश्वेश्वरी शिवाराध्या शिवनाथा शिवप्रिया ॥ २१ ॥

शिवमाता शिवाख्या च शिवदा शिवरूपिणी।
भवेश्वरी भवाराध्या भवेशी भवनायिका ॥ २२ ॥

भवमाता भवागम्या भवकण्टकनाशिनी।
भवप्रिया भवानन्दा भवानी भवमोहिनी ॥ २३ ॥

गायत्री चैव सावित्री ब्रह्माणी ब्रह्मरूपिणी ।
ब्रह्मेशी ब्रह्मदा ब्रह्म ब्राह्मणी ब्रह्मवादिनी ॥ २४ ॥

दुर्गस्था दुर्गरूपा च दुर्गा दुर्गार्त्तिनाशिनी ।
सुगमा दुर्गमा दान्ता दया दोग्ध्री दुरापहा ॥ २५ ॥

दुरितघ्नी दुरध्यक्षा दुरा दुष्कृतनाशिनी ।
पञ्चास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी ॥ २६ ॥

सत्त्वस्था सत्त्वरूपा च सत्त्वस्था सत्त्वसम्भवा ।
रजस्स्था च रजोरूपा रजोगुणसमुद्भवा ॥ २७ ॥

तमस्स्था च तमोरूपा तामसी तामसप्रिया ।
तमोगुणसमुद्भूता सात्त्विकी राजसी कला ॥ २८ ॥

काष्ठा मुहूर्ता निमिषा अनिमेषा ततः परम् ।
अर्धमासा च मासा च संवत्सरस्वरूपिणी ॥ २९ ॥

योगस्था योगरूपा च कल्पस्था कल्परूपिणी ।
नानारत्नविचित्राङ्गी नानाभरणमण्डिता ॥ ३० ॥

विश्वात्मिका विश्वमाता विश्वपाशविनाशिनी ।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ॥ ३१ ॥

जपाकुसुमसङ्काशा दाडिमीकुसुमोपमा ।
चतुरङ्गी चतुर्बाहुश्चतुराचारवासिनी ॥ ३२ ॥

सर्वेशी सर्वदा सर्वा सर्वदा सर्वदायिनी ॥
माहेश्वरी च सर्वाद्या शर्वाणी सर्वमङ्गला ॥ ३३ ॥
नलिनी नन्दिनी नन्दा आनन्दा ऽऽनन्दवर्धिनी ।
व्यापिनी सर्वभूतेषु भवभारविनाशिनी ॥ ३४ ॥

सर्वभृङ्गारवेषाढ्या पाशाङ्कुशकरोद्यता।
सूर्यकोटिसहस्राभा चन्द्रकोटिनिभानना॥ ३५॥

गणेशकोटिलावण्या विष्णुकोट्यरिमर्दिनी।
दावाग्निकोटिनलिनी रुद्रकोट्युग्ररूपिणी॥ ३६॥

समुद्रकोटिगम्भीरा वायुकोटिमहाबला॥
आकाशकोटिविस्तारा यमकोटिभयङ्करी॥ ३७॥

मेरुकोटिसमुच्छ्राया गणकोटिसमृद्धिदा।
निष्कस्तोका निराधारा निर्गुणा गुणवर्जिता॥ ३८॥

अशोका शोकरहिता तापत्रयविवर्जिता।
वसिष्ठा विश्वजननी विश्वाख्या विश्ववर्धिनी॥ ३९॥

चित्रा विचित्रचित्राङ्गी हेतुगर्भा कुलेश्वरी।
इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिः शुचिस्मिता॥ ४०॥

शुचिः स्मृतिमयी सत्या श्रुतिरूपा श्रुतिप्रिया।
महासत्त्वमयी सत्त्वा पञ्चतत्त्वोपरिस्थिता॥ ४१॥

पार्वती हिमवत्पुत्री पारस्था पाररूपिणी।
जयन्ती भद्रकाली च अहल्या कुलनायिका॥ ४२॥

भूतधात्री च भूतेशी भूतस्था भूतभावना।
महाकुण्डलिनी शक्तिर्महाविभववर्धिनी॥ ४३॥

हंसाक्षी हंसरूपा च हंसस्था हंसरूपिणी।
सोमसूर्याग्निमध्यस्था मणिमण्डलवासिनी॥ ४४॥

द्वादशारसरोजस्था सूर्यमण्डलवासिनी।
अकलङ्का शशाङ्काभा षोडशारनिवासिनी॥ ४५॥

डाकिनी राकिणी चैव लाकिनी काकिनी तथा ।
शाकिनी हाकिनी चैव षट्चक्रेषु निवासिनी ॥ ४६ ॥

सृष्टिस्थिति विनाशा च सृष्टिस्थित्यन्तकारिणी ।
श्रीकण्ठप्रियहृत्कण्ठा नन्दाख्या बिन्दुमालिनी ॥ ४७ ॥

चतुष्षष्टिकलाधारा देहदण्डसमाश्रिता ।
माया काली धृतिर्मेधा क्षुधा तुष्टिर्महाद्युतिः ॥ ४८ ॥

हिङ्गुला मङ्गला सीता सुषुम्नामध्यगामिनी ।
परघोरा करालाक्षी विजया जयदायिनी ॥ ४९ ॥

हृत्पद्मनिलया भीमा महाभैरवनादिनी ।
आकाशलिङ्गसम्भूता भुवनोद्यानवासिनी ॥ ५० ॥

महत्सूक्ष्मा च कङ्काली भीमरूपा महाबला ।
मेनकागर्भसम्भूता तप्तकाञ्चनसन्निभा ॥ ५१ ॥

अन्तरस्था कूटबीजा त्रिकूटाचलवासिनी ॥
वर्णाख्या वर्णरहिता पञ्चाशद्वर्णभेदिनी ॥ ५२ ॥

विद्याधरी लोकधात्री अप्सरा अप्सरः प्रिया ।
दीक्षा दाक्षायणी दक्षा दक्षयज्ञविनाशिनी ॥ ५३ ॥

यशःपूर्णा यशोदा च यशोदागर्भसम्भवा ।
देवकी देवमाता च राधिका कृष्णवल्लभा ॥ ५४ ॥

अरुन्धती शचीन्द्राणी गान्धारी गन्धमालिनी ।
ध्यानातीता ध्यानगम्या ध्यानज्ञा ध्यानधारिणी ॥ ५५ ॥

लम्बोदरी च लम्बोष्ठी जाम्बवन्ती जलोदरी ।
महोदरी मुक्तकेशी मुक्तकामाऽर्थसिद्धिदा ॥ ५६ ॥

तपस्विनी तपोनिष्ठा सुपर्णा धर्मवासिनी ।
बाणचापधरा धीरा पाञ्चाली पञ्चमप्रिया ॥ ५७ ॥

गुह्याङ्गी च सुभीमा च गुह्यतत्त्वा निरञ्जना ।
अशरीरा शरीरस्था संसारार्णवतारिणी ॥ ५८ ॥

अमृता निष्कला भद्रा सकला कृष्णपिङ्गला ।
चक्रप्रिया च चक्राह्वा पञ्चचक्रादिदारिणी ॥ ५९ ॥

पद्मरागप्रतीकाशा निर्मलाकाशसन्निभा ।
अधःस्था ऊर्ध्वरूपा च ऊर्ध्वपद्मनिवासिनी ॥ ६० ॥

कार्यकारणकर्तृत्वे शश्वद्रूपेषु संस्थिता ।
रसज्ञा रसमध्यस्था गन्धस्था गन्धरूपिणी ॥ ६१ ॥

परब्रह्मस्वरूपा च परब्रह्मनिवासिनी ।
शब्दब्रह्मस्वरूपा च शब्दस्था शब्दवर्जिता ॥ ६२ ॥

सिद्धिर्बुद्धिः परा बुद्धिः सन्दीप्तिर्मध्यसंस्थिता ।
स्वगुह्या शाम्भवी शक्तिस्तत्त्वस्था तत्त्वरूपिणी ॥ ६३ ॥

शाश्वती भूतमाता च महाभूताधिपप्रिया ।
शुचिप्रेता धर्मसिद्धिर्धर्मवृद्धिः पराजिता ॥ ६४ ॥

कामसन्दीपिनी कामा सदा कौतूहलप्रिया ।
जटाजूटधरा मुक्ता सूक्ष्मा शक्तिविभूषणा ॥ ६५ ॥

द्वीपिचर्मपरीधाना चीरवल्कलधारिणी ।
त्रिशूलडमरुधरा नरमालाविभूषणा ॥ ६६ ॥

अत्युग्ररूपिणी चोग्रा कल्पान्तदहनोपमा ।
त्रैलोक्यसाधिनी साध्या सिद्धिसाधकवत्सला ॥ ६७ ॥

सर्वविद्यामयी सारा चासुराणां विनाशिनी ।
दमनी दामनी दान्ता दयादोग्ध्री दुरापहा ॥ ६८ ॥

अग्निजिह्वोपमा घोरा घोरघोरतरानना ।
नारायणी नारसिंही नृसिंहहृदये स्थिता ॥ ६९ ॥

योगेश्वरी योगरूपा योगमाता च योगिनी ।
खेचरी खचरी खेला निर्वाणपदसंश्रया ॥ ७० ॥

नागिनी नागकन्या च सुवेशा नागनायिका ।
विषज्वालावती दीप्ता कलाशतविभूषणा ॥ ७१ ॥

तीव्रवक्त्रा महावक्त्रा नागकोटित्वधारिणी ।
महासत्त्वा च धर्मज्ञा धर्मातिसुखदायिनी ॥ ७२ ॥

कृष्णमूर्धा महामूर्धा घोरमूर्धा वरानना ।
सर्वेन्द्रियमनोन्मत्ता सर्वेन्द्रियमनोमयी ॥ ७३ ॥

सर्वसङ्ग्रामजयदा सर्वप्रहरणोद्यता ।
सर्वपीडोपशमनी सर्वारिष्टनिवारिणी ॥ ७४ ॥

सर्वैश्वर्यसमुत्पन्ना सर्वग्रहविनाशिनी ।
मातङ्गी मत्तमातङ्गी मातङ्गीप्रियमण्डला ॥ ७५ ॥

अमृतोदधिमध्यस्था कटिसूत्रैरलङ्कृता ।
अमृतोदधिमध्यस्था प्रवालवसनाम्बुजा ॥ ७६ ॥

मणिमण्डलमध्यस्था ईषत्प्रहसितानना ।
कुमुदा ललिता लोला लाक्षालोहितलोचना ॥ ७७ ॥

दिग्वासा देवदूती च देवदेवाधिदेवता ।
सिंहोपरिसमारूढा हिमाचलनिवासिनी ॥ ७८ ॥

अट्टाट्टहासिनी घोरा घोरदैत्यविनाशिनी ।
अत्युग्ररक्तवस्त्राभा नागकेयूरमण्डिता ॥ ७९ ॥

मुक्ताहारलतोपेता तुङ्गपीनपयोधरा ।
रक्तोत्पलदलाकारा मदाघूर्णितलोचना ॥ ८० ॥

समस्तदेवतामूर्तिः सुरारिक्षयकारिणी ।
खड्गिनी शूलहस्ता च चक्रिणी चक्रमालिनी ॥ ८१ ॥

शङ्खिनी चापिनी बाणी वज्रिणी वज्रदण्डिनी ॥
आनन्दोदधिमध्यस्था कटिसूत्रैरलङ्कृता ॥ ८२ ॥

नानाभरणदीप्ताङ्गी नानामणिविभूषिता ।
जगदानन्दसम्भूता चिन्तामणिगुणान्विता ॥ ८३ ॥

त्रैलोक्यनमिता तुर्या चिन्मयानन्दरूपिणी ।
त्रैलोक्यनन्दिनी देवी दुःखदुस्स्वप्ननाशिनी ॥ ८४ ॥

घोराग्निदाहशमनी राजदेवार्थसाधिनी ।
महापराधराशिघ्नी महाचौरभयापहा ॥ ८५ ॥

रागादिदोषरहिता जरामरणवर्जिता ।
चन्द्रमण्डलमध्यस्था पीयूषार्णवसम्भवा ॥ ८६ ॥

सर्वदेवैः स्तुता देवी सर्वसिद्धैर्नमस्कृता ।
अचिन्त्यशक्तिरूपा च मणिमन्त्रमहौषधी ॥ ८७ ॥

अस्तिस्वस्तिमयी बाला मलयाचलवासिनी ।
धात्री विधात्री संहारी रतिज्ञा रतिदायिनी ॥ ८८ ॥

रुद्राणी रुद्ररूपा च रुद्रा रौद्रार्तिनाशिनी ।
सर्वज्ञा चैव धर्मज्ञा रसज्ञा दीनवत्सला ॥ ८९ ॥

अनाहता त्रिनयना निर्भारा निर्वृतिः परा ।
पराघोरा करालाक्षी सुमतिः श्रैष्ठ्यदायिनी ॥ ९० ॥

मन्त्रालिका मन्त्रगम्या मन्त्रमाला सुमन्त्रिणी ।
श्रद्धा नन्दा महाभद्रा निर्द्वन्द्वा निर्गुणात्मिका ॥ ९१ ॥

धरिणी धारिणी पृथ्वी धरा धात्री वसुन्धरा ।
मेरुमन्दरमध्यस्था स्थितिः शङ्करवल्लभा ॥ ९२ ॥

श्रीमती श्रीमयी श्रेष्ठा श्रीकरी भावभाविनी ।
श्रीदा श्रीमा श्रीनिवासा श्रीमती श्रीमतां गतिः ॥ ९३ ॥

उमा सारङ्गिणी कृष्णा कुटिला कुटिलालका ।
त्रिलोचना त्रिलोकात्मा पुण्यपुण्या प्रकीर्तिता ॥ ९४ ॥

अमृता सत्यसङ्कल्पा सा सत्या ग्रन्थिभेदिनी ।
परेशी परमा साध्या परा विद्या परात्परा ॥ ९५ ॥

सुन्दराङ्गी सुवर्णाभा सुरासुरनमस्कृता ।
प्रजा प्रजावती धन्या धनधान्यसमृद्धिदा ॥ ९६ ॥

ईशानी भुवनेशानी भवानी भुवनेश्वरी ।
अनन्तानन्तमहिता जगत्सारा जगद्भवा ॥ ९७ ॥

अचिन्त्यात्माऽचिन्त्यशक्तिश्चिन्त्या चिन्त्यस्वरूपिणी ।
ज्ञानगम्या ज्ञानमूर्तिर्ज्ञानिनी ज्ञानशालिनी ॥ ९८ ॥

असिता घोररूपा च सुधाधारा सुधावहा ।
भास्करी भास्वती भीतिर्भास्वदक्षाऽनुशायिनी ॥ ९९ ॥

अनसूया क्षमा लज्जा दुर्लभा भरणात्मिका ।
विश्वघ्नी विश्ववीरा च विश्वघ्नी विश्वसंस्थिता ॥ १०० ॥

शीलस्था शीलरूपा च शीला शीलप्रदायिनी।
बोधनी बोधकुशला रोधनी बोधनी तथा ॥ १०१ ॥

विद्योतिनी विचित्रात्मा विद्युत्पटलसन्निभा।
विश्वयोनिर्महायोनिः कर्मयोनिः प्रियात्मिका ॥ १०२ ॥

रोहिणी रोगशमनी महारोगज्वरापहा।
रसदा पुष्टिदा पुष्टिर्मानदा मानवप्रिया ॥ १०३ ॥

कृष्णाङ्गवाहिनी कृष्णाऽकृष्णा कृष्णसहोदरी।
शाम्भवी शम्भुरूपा च शम्भुस्था शम्भुसम्भवा ॥ १०४ ॥

विश्वोदरी योगमाता योगमुद्रा च योगिनी।
वागीश्वरी योगनिद्रा योगिनीकोटिसेविता ॥ १०५ ॥

कौलिका मन्दकन्या च शृङ्गारपीठवासिनी।
क्षेमङ्करी सर्वरूपा दिव्यरूपा दिगम्बरी ॥ १०६ ॥

धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा।
पिनाकी रुद्रवेताली महावेतालरूपिणी ॥ १०७ ॥

तपिनी तापिनी दीक्षा विष्णुविद्याऽऽत्मनाश्रिता।
मन्थरा जठरा तीव्रा अग्निजिह्वा भयापहा ॥ १०८ ॥

पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी।
पिता माता च धीरा च पशुपाशविनाशिनी ॥ १०९ ॥

चन्द्रप्रभा चन्द्ररेखा चन्द्रकान्तिविभूषिणी।
कुङ्कुमाङ्कितसर्वाङ्गी सुधा सद्गुरुलोचना ॥ ११० ॥

शुक्लाम्बरधरा देवी वीणापुस्तकधारिणी।
ऐरावता पद्मधारा श्वेतपद्मासनस्थिता ॥ १११ ॥

रक्ताम्बरधरा देवी रक्तपद्मविलोचना।
दुस्तरा तारिणी तारा तरुणीताररूपिणी ॥ ११२ ॥

सुधाधारा च धर्मज्ञा धर्मसङ्गोपदेशिनी।
भगेश्वरी भगाराध्या भगिनी भगनायिका ॥ ११३

भगबिम्बा भगक्लिन्ना भगयोनिर्भगप्रदा।
भगेश्वरी भगाराध्या भगिनी भगनायका ॥ ११४ ॥

भगेशी भगरूपा च भगगुह्या भगावहा।
भगोदरी भगानन्दा भगस्था भगशालिनी ॥ ११५ ॥

सर्वसंक्षोभिणी शक्तिस्सर्वविद्राविणी तथा।
मालिनी माधवी माध्वी मधुरूपा महोत्कटा ॥ ११६ ॥

भेरुण्डा चन्द्रिका ज्योत्स्ना विश्वचक्षुस्तमोपहा।
सुप्रसन्ना महादूती यमदूती भयङ्करी ॥ ११७ ॥

उन्मादिनी महारूपा दिव्यरूपा सुरार्चिता।
चैतन्यरूपिणी नित्या क्लिन्ना काममदोद्धता ॥ ११८ ॥

मदिराऽऽनन्दकैवल्या मदिराक्षी मदालसा।
सिद्धेश्वरी सिद्धविद्या सिद्धाद्या सिद्धसम्भवा ॥ ११९ ॥

सिद्धर्द्धिः सिद्धमाता च सिद्धिस्सर्वार्थसिद्धिदा।
मनोमयी गुणातीता परज्योतिःस्वरूपिणी ॥ १२० ॥

परेशी परगा पारा परासिद्धिः परागतिः।
विमला मोहिनी आद्या मधुपानपरायणा ॥ १२१ ॥

वेदवेदाङ्गजननी सर्वशास्त्रविशारदा।
सर्वदेवमयी विद्या सर्वशास्त्रमयी तथा ॥ १२२ ॥

सर्वज्ञानमयी देवी सर्वधर्ममयीश्वरी।
सर्वयज्ञमयी यज्ञा सर्वमन्त्राधिकारिणी॥ १२३ ॥

सर्वसम्पत्प्रतिष्ठात्री सर्वविद्राविणी परा।
सर्वसङ्क्षोभिणी देवी सर्वमङ्गलकारिणी॥ १२४ ॥

त्रैलोक्याकर्षिणी देवी सर्वाह्लादनकारिणी।
सर्वसम्मोहिनी देवी सर्वस्तम्भनकारिणी॥ १२५ ॥

त्रैलोक्यजृम्भिणी देवी तथा सर्ववशङ्करी।
त्रैलोक्यरञ्जिनी देवी सर्वसम्पत्तिदायिनी॥ १२६ ॥

सर्वमन्त्रमयी देवी सर्वद्वन्द्वक्षयङ्करी।
सर्वसिद्धिप्रदा देवी सर्वसम्पत्प्रदायिनी॥ १२७ ॥

सर्वप्रियकरी देवी सर्वमङ्गलकारिणी।
सर्वकामप्रदा देवी सर्वदुःखविमोचिनी। १२८ ॥

सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी।
सर्वाङ्गसुन्दरी माता सर्वसौभाग्यदायिनी॥ १२९ ॥

सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी॥ १३० ॥

सर्वाधारस्वरूपा च सर्वपापहरा तथा।
सर्वानन्दमयी देवी सर्वेक्षायाःस्वरूपिणी॥ १३१ ॥

सर्वलक्ष्मीमयी विद्या सर्वेप्सितफलप्रदा।
सर्वारिष्टप्रशमनी परमानन्ददायिनी॥ १३२ ॥

त्रिकोणनिलया त्रिस्था त्रिमात्रा त्रितनुस्थिता।
त्रिवेणी त्रिपथा त्रिस्था त्रिमूर्त्तिस्त्रिपुरेश्वरी॥ १३३ ॥

त्रिधाम्नी त्रिदशाध्यक्षा त्रिवित् त्रिपुरवासिनी।
त्रयी विद्या च त्रिशिरा त्रैलोक्या च त्रिपुष्करा ॥ १३४ ॥

त्रिकोटरस्था त्रिविधा त्रिपुरा त्रिपुरात्मिका।
त्रिपुराश्रीस्त्रिजननी त्रिपुरा त्रिपुरसुन्दरी ॥ १३५ ॥

इदं त्रिपुरसुन्दर्याः स्तोत्रं नामसहस्रकम्।
गुह्याद् गुह्यतरं पुत्र तव प्रीत्यै प्रकीर्तितम् ॥ १३६ ॥

गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः।
नातः परतरं पुण्यं नातः परतरं तपः ॥ १३७ ॥

नातः परतरं स्तोत्रं नातः परतरा गतिः।
स्तोत्रं सहस्रनामाख्यं मम वक्त्राद्विनिर्गतम् ॥ १३८ ॥

यः पठेत्प्रयतो भक्त्या शृणुयाद्वा समाहितः।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ॥ १३९ ॥

कामांश्च प्राप्नुयात्कामी धनार्थी च लभेद्धनम्।
विद्यार्थी लभते विद्यां यशोर्थी लभते यशः ॥ १४० ॥

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम्।
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम् ॥ १४१ ॥

मूर्खोऽपि लभते शास्त्रं हीनोऽपि लभते गतिम्।
सङ्क्रान्त्या वार्कामावस्यामष्टम्याश्च विशेषतः ॥ १४२ ॥

पौर्णमास्यां चतुर्दश्यां नवम्यां भौमवासरे।
पठेद्वा पाठयेद्वापि शृणुयाद्वा समाहितः ॥ १४३ ॥

स मुक्तस्सर्वपापेभ्यः कामेश्वरसमो भवेत्।
लक्ष्मीवान्धर्मवांश्चैव वल्लभस्सर्वयोषिताम् ॥ १४४ ॥

तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
रुद्रं दृष्ट्वा यथा देवा विष्णुं दृष्ट्वा च दानवाः ॥ १४५ ॥

यथाहिर्गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ।
कीटवत्प्रपलायन्ते तस्य वक्त्रावलोकनात् ॥ १४६ ॥

अग्निचौरभयं तस्य कदाचिन्नैव संभवेत् ।
पातका विविधाः शान्ता मेरुपर्वतसन्निभाः ॥ १४७ ॥

यस्मात्तच्छृणुयाद्विघ्नांस्तृणं वह्निहुतं यथा ।
एकदा पठनादेव सर्वपापक्षयो भवेत् ॥ १४८ ॥

दशधा पठनादेव वाचा सिद्धिः प्रजायते ।
शतधा पठनाद्वापि खेचरो जायते नरः ॥ १४९ ॥

सहस्रदशसङ्ख्यातो यः पठेद्भक्तिमानसः ।
मातास्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ॥

लक्षपूर्णे यथा पुत्र स्तोत्रराजं पठेत्सुधीः ॥

भवपाशविनिर्मुक्तो मम तुल्यो न संशयः ॥

सर्वतीर्थेषु यत्पुण्यं सकृज्जप्त्वा लभेन्नरः ॥

सर्ववेदेषु यत्प्रोक्तं तत्फलं परिकीर्त्तितम् ॥

भूत्वा च बलवान्पुत्र धनवान् सर्वसम्पदः ॥

देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥

स यास्यति न सन्देहः स्तवराजस्य कीर्त्तनात् ॥

इति श्रीवामकेश्वरतन्त्रे हरकुमारसंवादे
महात्रिपुरसुन्दर्याः षोडश्याः सहस्रनामस्तोत्रं समाप्तम् ॥

# आम्नायस्तोत्रम्

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्॥

(गुरुपादुकामनुमुच्चार्य, सुमुखादिभिः पञ्चमुद्राभिः श्रीगुरुं प्रणम्य)

शुद्धविद्या च बाला च द्वादशार्धा मतङ्गिनी।
द्विजत्वसाधिनी विद्या गायत्री वेदमातृका॥ १॥

गाणपत्यं कार्तिकेयं मृत्युञ्जयं नीलकण्ठम्।
त्र्यम्बकं जातवेदाश्च तथा प्रत्यङ्गिरादयः॥ २॥

मुखात्तत्पुरुषाज्जाता द्विकोटीमन्त्रनायिकाः।
एताः कामगिरीन्द्राश्च पूर्वाम्नायस्य देवताः॥ ३॥

गुरुत्रयादिपीठान्तं चतुर्विंशत्सहस्रकम्।
एतदावरणोपेतं पूर्वाम्नायं भजाम्यहम्॥ ४॥

विशुद्धौ चिन्तयेद्धीमान् पूर्वाम्नायस्य देवताः।
सौभाग्यविद्या बगळा वाराही वटुकस्तथा॥ ५॥

श्रीतिरस्करिणी प्रोक्ता महामाया प्रकीर्तिता।
अघोरं शरभं खड्गरावणं वीरभद्रकम्॥ ६॥

रौद्रं शास्ता पाशुपताद्यस्त्रशस्त्रादिभैरवाः।
दक्षिणामूर्तिमन्त्राद्याः शैवागमसमुद्भवाः॥ ७॥

अघोरमुखसम्भूतं मदंशं कोटिसंख्यकम् ।
पूर्वपीठस्थिता देवि दक्षिणाम्नायदेवताः ॥ ८ ॥

द्विसहस्रं तु देव्यस्ताः परिवारसमन्विताः ।
भैरवादिपदद्वन्द्वं भजे दक्षिणमुत्तमम् ॥ ९ ॥

अनाहते चिन्तयेच्च दक्षिणाम्नायदेवताः ।
लोपामुद्रा महादेवी अम्बा च भुवनेश्वरी ॥ १० ॥

अन्नपूर्णा कामकला सर्वसिद्धिप्रदायिनी ।
सुदर्शनं वैनतेयं कार्तवीर्यं नृसिंहकम् ॥ ११ ॥

नामत्रयं राममन्त्रं गोपालं सौरमेव च ।
धन्वन्तरीन्द्रजालं च इन्द्रादिसुरमन्त्रकम् ॥ १२ ॥

दत्तात्रेयं द्वादशाष्टौ वैष्णवागमचोदिताः ।
सद्योजातमुखोद्भूता मन्त्राः स्युः कोटिसंख्यकाः ॥ २३ ॥

एता जालन्ध्रपीठस्थाः पश्चिमाम्नायदेवताः ।
दूत्यादि च चतुष्षष्टि सिद्धान्तं त्रिसहस्रकम् ॥ २४ ॥

आम्नायं पश्चिमं वन्दे सर्वदा सर्वकामदम् ।
मणिपूरे चिन्तनीयाः पश्चिमाम्नायदेवताः ॥ २५ ॥

तुरीयाम्बा महार्धा च अश्वारुढा तथैव च ।
मिश्राम्बा च महालक्ष्मीः श्रीमद्वाग्वादिनी अपि ॥ १६ ॥

दुर्गा काळी ततश्चण्डी नकुली च पुळिन्दिनी ।
रेणुका लक्ष्मिवागीशमातृकाद्याः स्वयंवरा ॥ १७ ॥

पश्चाम्नायसमोपेतं श्रीविद्याख्यं मदंशकम् ।
वामदेवमुखोद्भूता द्विकोटिमन्त्रनायिका: ॥ १८ ॥

एता ओड्याणपीठस्थाः शाक्तागमसमुद्भवाः ।
द्विसहस्रं तु देव्यस्ताः परिवारसमन्विताः ॥ १९ ॥

मुद्रादिनवकं चैव सिद्धानां मिथुनं तथा ।
वीरावळीपञ्चकं च भजेदाम्नायमुत्तरम् ॥ २० ॥

स्वाधिष्ठाने चिन्तनीया उत्तराम्नायदेवताः ।
परापरा च सा देवी पराशाम्भवमेव च ॥ २१ ॥

प्रासादं दहरं हंसं महावाक्यादिकं परम् ।
पञ्चाक्षरं महामन्त्रं तारकं जन्मतारकम् ॥ २२ ॥

ईशानमुखसम्भूतं स्वात्मानन्दप्रकाशकम् ।
कोटिसंख्या महादेवि मद्रूपाः सर्वसिद्धिदाः ॥ २३ ॥

एताः शाम्भवपीठस्थाः सहस्रपरिवारिताः ।
आराध्य मालिनीपूर्वं मण्डलान्तं तथैव च ॥ २४ ॥

सायुज्यहेतुकं नित्यं वन्दे चोर्ध्वमकल्मषम् ।
ऊर्ध्वाम्नायमनून्नित्यं मूलाधारे विभावयेत् ॥ २५ ॥

पञ्चाम्बा नवनाथाश्च मूलविद्यास्ततः परम् ।
आधारविद्याषट्कं च पुनरंघ्रिद्वयं क्रमात् ॥ २६ ॥

शाम्भवी चाथ हृल्लेखा समया परबोधिनी ।
कौलपञ्चाक्षरी पञ्चदशार्णाऽनुत्तरात्मिका ॥ २७ ॥

षोडशी पूर्तिविद्या च महात्रिपुरसुन्दरी ।
ऊर्ध्वश्रीपादुकापूर्वं चरणान्तं गुरुक्रमात् ॥ २८ ॥

पश्चादनुत्तरं वन्दे परब्रह्मस्वरूपिणीम् ।
अनुत्तराम्नायमनूनाज्ञाचक्रे विभावयेत् ॥ २९ ॥

श्रीनाथगुरुमन्त्रादीन्मण्डलान्तं यथाक्रमम् ।
सप्तकोटिमहामन्त्रं द्वादशान्ते सदा स्मरेत् ॥ ३० ॥

शुचिर्वाप्यशुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसापि सदा स्मरन् ॥ ३१ ॥

तत्तत्सिद्धिं च साहस्रं जपेत्साधकपुङ्गवः ।
जपान्ते शुद्धमाला च आम्नायस्तोत्रमुत्तमम् ॥ ३२ ॥

ललितानामसाहस्रं सर्वपूर्तिकरं स्तवम् ।
स्तवराजं च पञ्चैते भक्तः प्रतिदिनं पठेत् ॥ ३३ ॥

भुक्त्वा भोगान् यथाकामं सर्वभूतहिते रतः ।
सभार्यापुत्रसौभाग्यः सभूतिः पशुमान् भवेत् ॥ ३४ ॥

एकवारं जपेदेतत् कोटियज्ञफलं लभेत् ।
एतद्विज्ञानमात्रेण सर्वेषां देशिकोत्तमः ॥

शिवसायुज्यमाप्नोति शिवयोरेव शासनात् ॥ ३५ ॥

रुद्रयामलतः शिवविरचितं आम्नायस्तोत्रम् ॥

# श्रीत्रिपुरास्तवराजः

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥ १ ॥

सेवे सिन्दूरसंदोहसुन्दरस्वाङ्गभासुराम् ।
करुणापूरपीयूषकटाक्षां कुलनायिकाम् ॥ २ ॥

द्विनेत्रं द्विभुजं शान्तं गुरुं पद्मासनस्थितम् ।
योगपीठे समासीनं नमामि शिरसि स्थितम् ॥ ३ ॥

नमामि सद्गुरुं शान्तं प्रत्यक्षशिवरूपिणम् ।
शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ॥ ४ ॥

या नित्या परमा शक्तिर्जगच्चैतन्यरूपिणी ।
तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम् ॥ ५ ॥

यस्याः सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति ।
लयमेष्यति यस्यां तां पञ्चमीं प्रणमाम्यहम् ॥ ६ ॥

श्रीमत्कल्पतरोर्मूले भवान्या रत्नमन्दिरे ।
रत्नसिंहासने देव्याः श्रीचक्रं प्रणमाम्यहम् ॥ ७ ॥

भूगृहं गुणरेखाढ्यं वेदद्वारोपशोभितम् ।
त्रिवृत्तं षोडशदलं तथाष्टदलकर्णिकम् ॥ ८ ॥

मनुकोणं द्विदिक्कोणं वसुकोणं त्रिकोणकम् ।
मध्ये बिन्दुमहाचक्रं नित्यं श्रीत्रिपुरामयम् ॥ ९ ॥

ब्रह्माण्डाधारशक्तिश्च कलास्मरपुरन्दराः ।
एताः संयोज्य पुरत ईश्वरीं योजयेच्छिवे ॥ १० ॥

चन्द्रबीजं बिन्दुसंस्थं शिवबीजं नियोजयेत् ।
मादनं शक्रबीजस्थं योजयेद्भुवनेश्वरीम् ॥ ११ ॥

शिवबीजं मादनस्थं शक्रषष्टिसमन्वितम् ।
सप्तमं तच्च शक्रस्थं मायाबीजं समुद्धरेत् ॥ १२ ॥

तुङ्गाक्षरं शिवादिस्थं मरुदिन्द्रसमन्वितम् ।
धरन्धरसुताबीजमेकत्रापि नियोजयेत् ॥ १३ ॥

बगलातुरीयबीजाधः षोडशं च नियोजयेत्।
वाक्स्थं तुरीयकं बीजं शाक्रबीजं नियोजयेत्॥ १४॥

पिनाकेशं चन्द्रसंस्थमाकाशं रससंस्थितम्।
चतुर्थस्वरसंयुक्तं नादबिन्दुसमन्वितम्॥ १५॥

सर्वमेकत्र संयोज्य पञ्चपञ्चाक्षरी भवेत्।
पञ्चकूटात्मिका विद्या सर्वतन्त्रेषु गोपिता॥ १६॥

(कएईलह्रीं हसकलह्रीं हकहलह्रीं हकएलह्रीं हकलसह्रीं)

विद्याचूडामणिर्देवी प्रोक्ता सर्वोत्तमोत्तमा।
तव स्नेहान्मयाख्याता नाख्येया यस्य कस्यचित्॥ १७॥

इन्द्रो मां रक्षयेत्प्राच्यामाग्नेय्यामग्निदेवता।
याम्ये यमः सदा पातु नैर्ऋते निर्ऋतिश्च माम्॥ १८॥

पश्चिमे वरुणः पातु वायव्ये वायुदेवता।
धनदश्चोत्तरे पातु ऐशान्यामीश्वरोऽवतु॥ १९॥

ऊर्ध्वं प्रजापतिः पायादधश्चानन्तदेवता।
एवं दश दिशो रक्षां कुर्वन्त्वाशाधिदेवताः॥ २०॥

गणेशः  सर्वदा पातु क्षेत्रेशो रक्षयेत्सदा।
द्वारश्रीः सर्वदा पातु देहली पातु सर्वदा॥ २१॥

गणनाथः सदा पातु दुर्गा मां परिरक्षतु।
वटुको भैरवश्चान्ते क्षेत्रपालोऽभिरक्षतु॥ २२॥

सह रत्या स्वपत्न्या च कामदेवश्च सर्वदा।
प्रीत्या सह वसन्तोऽपि पातु मां नन्दने वने॥ २३॥

चक्रस्य पश्चिमद्वारे भवान्या रत्नमन्दिरे।
शङ्खपद्मनिधी रक्षां कुरुतां कामसिद्धये ॥ २४ ॥

पातु मां रत्नसोपानं परमैश्वर्यशोभितम्।
रक्षयेत्पश्चिमद्वारे भवान्या रत्नमन्दिरे ॥ २५ ॥

सरस्वती महालक्ष्मीर्माया दुर्गा विभूतये।
भद्रकाली तथा स्वस्ती स्वाहा चैव शुभंकरी ॥ २६ ॥

गौरी च लोकधात्री च वागीश्वर्यादयो मम।
एताश्चात्र स्थिताः सर्वा रक्षां कुर्वन्तु सर्वदा ॥ २७ ॥

पाषण्डाचारिणो भूता भूमौ ये चान्तरिक्षगाः।
दिवि लोके स्थिता ये च ते गच्छन्तु शिवाज्ञया ॥ २८ ॥

वास्तूनामधिपो ब्रह्मा स्रष्टा रक्षतु सर्वदा।
कुलनाथः सदा पातु द्वीपनाथोऽपि सर्वदा।
शिवं कुर्वन्तु ताः सर्वा आसने पञ्चदेवताः ॥ २९ ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ३० ॥

चक्रस्य दक्षिणे भागे श्रीमत्पात्रस्य मण्डले।
पञ्चरत्नानि मे पान्तु पूजकानां च सिद्धये ॥ ३१ ॥

तत्र पात्रासने पुण्ये सर्वदा वह्निमण्डले।
वह्नेश्च मण्डलं पातु कुलदेव्याश्च पूजने ॥ ३२ ॥

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे दश ॥ ३३ ॥

वह्नेर्दशकला ज्ञेयाः सर्वधर्मफलप्रदाः ।
एताभिः सहितो रक्षां कुर्याद्वैश्वानरो मम ॥ ३४ ॥

तत्र पात्रवरे दिव्ये श्रीमदादित्यमण्डले ।
सूर्यस्य मण्डलं पातु मम सर्वार्थसिद्धये ॥ ३५ ॥

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ ३६ ॥

कभाद्यर्णयुता भानोष्ठडान्ता द्वादशेरिताः ।
एताः कलास्तु सूर्यस्य सूर्यमण्डलसंस्थिताः ।
एताभिः सहितो रक्षामादित्यः प्रकरोतु मे ॥ ३७ ॥

तत्र पात्रामृते दिव्ये सोमस्यामृतमण्डले ।
अमृतं सर्वदा पातु भैरवानन्दहेतुकम् ॥ ३८ ॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ३९ ॥

पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः ।
सोममण्डलमध्यस्था रक्षां कुर्वन्तु सर्वदा ॥ ४० ॥

रविवेदकलापूर्णे सुधासंपूर्णमण्डले ।
नक्षत्राधिपती रक्षां करोतु मम भूतये ॥ ४१ ॥

सूर्याग्निमण्डले दिव्ये संपूर्णे शशिमण्डले ।
पातु मां खेचरीबीजं दोषैकादशनाशकृत् ॥ ४२ ॥

शक्तियुक्ते सुरानन्दे भैरवाद्यैः सशक्तिभिः ।
आनन्दभैरवो रक्षां करोतु मम सर्वदा ॥ ४३ ॥

तत्र पूर्णामृते पुण्ये शक्तिर्या वारुणी कला।
आनन्दरूपिणी रक्षां करोतु मम सर्वदा॥ ४४॥

सृष्टिर्बुद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा।
स्थितिः सिद्धिरिति ख्याताः कचवर्गकला दश॥ ४५॥

अकाराद् ब्रह्मणोत्पन्नाः सृष्टिकर्मणि तत्पराः।
एताभिः सहितः पायाद्ब्रह्मा मां वाक्प्रदः सदा॥ ४६॥

जरा च पालिनी शान्तिरीश्वरी रतिकामिके।
वरदा ह्लादिनी प्रीतिर्दीर्घा च टतवर्गगाः॥ ४७॥

उकाराद्विष्णुसंभूताः स्थितिकर्मणि तत्पराः।
एताभिः सहितः पायान्मां विष्णुः पुष्टिदायकः॥ ४८॥

तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधिनी क्रिया।
उद्गारा मृत्युरूपा च पयवर्गकला दश॥ ४९॥

मकाराद्रुद्रसंभूताः संहारनिरताः सदा।
एताभिः सहितो रुद्रो मां पायान्मृत्युनाशकः॥ ५०॥

तिरस्करिण्यः पशुहृत्पञ्चेन्द्रियविमोहनाः।
अनन्तान्तास्तु ताः पञ्च पीता श्वेतारुणासिता॥ ५१॥

बिन्दोरीश्वरसंभूताः षलवर्गकलास्तथा।
तिरोधानपराभिर्मां पायादेताभिरीश्वरः॥ ५२॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च।
इन्धिका दीपिका चेति रेचिका मोचिका परा॥ ५३॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता आप्यायिनी तथा।
व्यापिनी व्योमरूपा च अनन्ता चेति षोडश॥ ५४॥

एताः स्वरकला नादात्सदाशिवसमुद्भवाः ॥ ५५ ॥

अनुग्रहप्रदा नित्यं सर्वसिद्धिप्रदायिकाः ।
एताभिः सहितः पायात्सदापूर्वः शिवस्तु माम् ॥ ५६ ॥

मातृका पातु मां नित्यं सर्वमन्त्रस्वरूपिणी ।
अखण्डैकरसानन्दकरी मां पातु सर्वदा ॥ ५७ ॥

अमृतेशी सदा पातु दीपिनी पातु सर्वदा ।
मूलविद्या च मां पातु श्रीमत्त्रिपुरसुन्दरी ॥
कामेश्वर्यादिभिर्युक्ता नित्याभिः पातु मां सदा ॥ ५८ ॥

सर्वाधो मण्डुकाकारे रुद्रः कालानलो विभुः ॥ ५९ ॥

रक्षां करोतु मे नित्यं या मूलप्रकृतिः सदा ।
ततश्चाधारशक्तिर्या मम रक्षां करोतु सा ॥ ६० ॥

कूर्मस्तु सततं पायादनन्तो रक्षयेत्सदा ।
तस्य मूर्ध्नि स्थितः श्वेतवराहः परिरक्षतु ॥ ६१ ॥

दन्ते तस्य स्थिता पृथ्वी पातु नित्यं वसुन्धरा ।
समुद्रः सर्वदा पातु सुरत्नैरमृतैर्जलैः ॥ ६२ ॥

रत्नदीपं च मे रक्षां करोतु स्वर्णपर्वतः ।
पातु मां नन्दनोद्यानं पान्तु मां कल्पभूरुहः ॥ ६३ ॥

अधस्तेषां सदा पातु विचित्रा रत्नभूमिका ।
वालुकाः पञ्च मां पान्तु पान्तु देवमहीरुहः ॥ ६४ ॥

नवरत्नमयास्तत्र प्राकाराः पान्तु मां नव ।
श्रीरत्नमन्दिरं दिव्यं चिन्तामणिविभूषितम् ॥ ६५ ॥

तत्र पद्मे महादिव्ये प्रभामण्डलवेदिका।
श्वेतच्छत्रं सदा पातु रत्नमुक्तामणिप्रभम्॥ ६६ ॥

प्रभामध्यस्थितं पातु रत्नसिंहासनं च माम्।
सिंहासनस्य पार्श्वस्थं धर्मो ज्ञानं च रक्षतु॥ ६७ ॥

वैराग्यं रक्षयेन्नित्यमैश्वर्यं रक्षयेत्सदा।
अधर्मो रक्षयेन्नित्यमज्ञानं परिरक्षतु॥ ६८ ॥

अवैराग्यं तु मां पायादनैश्वर्यं तु सर्वदा।
सिंहासनस्य मध्यस्था दुर्गा मां परिरक्षतु॥ ६९ ॥

माया मां पातु तत्रैव विद्या मां परिरक्षतु।
श्रीविद्या शुद्धविद्या च मातङ्गी भुवनेश्वरी॥ ७० ॥

वाराही च समाख्याताः पञ्चविद्याश्च पान्तु माम्।
अनन्तो रक्षयेन्नित्यं फणपञ्चदशान्वितः॥ ७१ ॥

तन्मध्यफणमध्यस्थं महापद्मं च रक्षतु।
पातु चानन्दकन्दं मां ज्ञाननालं च सर्वदा॥ ७२ ॥

दला प्रकृतिरूपा मां प्रकृत्याकारकेसरैः।
पातु मां पातु नित्यं सा तत्त्वरूपा च कर्णिका॥ ७३ ॥

सूर्यस्य मण्डलं पातु पातु मां सोममण्डलम्।
वह्नेश्च मण्डलं पातु सत्त्वं रक्षतु सर्वदा॥
रजश्च पातु मां नित्यं पातु नित्यं तमोगुणः॥ ७४ ॥

आत्मा चैवान्तरात्मा च परमात्मा च रक्षतु।
ज्ञानात्मा च तथा रक्षां करोतु मम सर्वदा॥ ७५ ॥

आत्मतत्त्वं शक्तितत्त्वं विद्यातत्त्वं तथैव च।
सदाशिवस्य यत्तत्त्वं तत्सर्वं पातु मां सदा॥ ७६ ॥

ज्ञानं मायाकलाविद्यातत्त्वात्मानो विभूतयः।
रत्नसिंहासने देव्या रक्षां कुर्वन्तु सर्वदा॥ ७७ ॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एते पञ्च महाप्रेता रक्षां कुर्वन्तु सर्वदा॥ ७८ ॥

सुधार्णवासनं पातु पातु पोताम्बुजासनम्।
देव्यासनं सदा पातु पातु चक्रासनं च माम्॥ ७९ ॥

सर्वमन्त्रासनं पातु साध्यसिद्धासनं तथा।
नवयोन्यासनं पातु सर्वदा मम रक्षणम्॥ ८० ॥

करोतु कुलसुन्दर्याः कामरूपं शिवासनम्।
तत्रैव संस्थिता देव्यो रक्षां कुर्वन्तु सर्वदा॥ ८१ ॥

त्रिपुरा त्रिपुरेशी च त्रिपुराद्या च सुन्दरी।
त्रिपुरावासिनी पश्चात् त्रिपुराश्रीश्च मालिनी॥ ८२ ॥

सिद्धाम्बा भैरवीत्येतास्त्रिपुराद्याश्च पान्तु माम्।
गुरवो दिव्यसिद्धौघमानवौघास्त्रिधा स्थिताः॥ ८३ ॥

मुनिवेदनागसंख्या रक्षां कुर्वन्तु सर्वदा।
समस्तप्रकटा गुप्तास्तथा गुप्ततराश्च याः॥ ८४ ॥

संप्रदायाः कुलोत्तीर्णा निगर्भाश्च रहस्यकाः।
तथैवातिरहस्याश्च परापररहस्यकाः॥ ८५ ॥

नवधा पूजनं तत्र योगिनीनां विधीयते।
एतास्तु सततं रक्षां कुर्वन्तां योगिनीगणाः॥ ८६ ॥

त्रैलोक्यमोहनं चक्रं प्रथमं परिरक्षतु।
अणिमा पश्चिमे पातु लघिमा चोत्तरे तथा ॥ ८७ ॥

पूर्वद्वारे च महिमा ईशिता पातु दक्षिणे।
वशिता मारुते पातु प्राकाम्या त्वीशके तथा ॥ ८८ ॥

भुक्तिसिद्धिस्तथाग्नेय्यामिच्छा रक्षतु नैर्ऋते।
अधः पातु सदा प्राप्तिः सर्वकामप्रदायिनी ॥ ८९ ॥

सर्वकामा सदा पातु ऊर्ध्वे चोर्ध्वनिवासिनी।
एताः प्रथमरेखायां सर्वाः प्रकटपूरिताः ॥ ९० ॥

भैरवश्चासिताङ्गो यः कामरूपस्य पीठके।
ब्रह्माणीसहितः पूर्वे द्वारे मां परिरक्षतु ॥ ९१ ॥

मलये चाग्निदिग्भागे संस्थितो रुरुभैरवः।
माहेशीसहितः पातु कुलाचारस्य सिद्धये ॥ ९२ ॥

चण्डः कोलगिरौ रक्षां कौमारीसहितो यमे।
करोतु भैरवो नित्यं पूजकानां च सिद्धये ॥ ९३ ॥

वैष्णवीसहितः क्रोधः कुलान्ते पीठराजके।
नैर्ऋते सर्वदा पातु भोगमोक्षार्थसिद्धये ॥ ९४ ॥

चौहार्ये पश्चिमे पीठे वाराहीसहितः सदा।
उन्मत्तभैरवो रक्षां करोतु मम सिद्धये ॥ ९५ ॥

जालन्धरे महापीठे कपाली भैरवः सदा।
इन्द्राणीसहितो रक्षां वायव्ये प्रकरोतु मे ॥ ९६ ॥

ओड्याणे चोत्तरे पीठे चामुण्डासहितः सदा।
भीषणो भैरवः पातु साधकानां च सिद्धये ॥ ९७ ॥

संहारश्चण्डिकायुक्तो देवीकोष्ठे च पीठके ।
ऐशान्यां रक्षयेन्नित्यं कुलाचारस्य सिद्धये ॥ ९८ ॥

एते द्वितीयरेखायां संस्थिताश्चतुरश्रगाः ।
सर्वसंक्षोभिणी मुद्रा पश्चिमे पातु सर्वदा ॥ ९९ ॥

द्राविणी चोत्तरे पातु पूर्वे चाकर्षणी सदा ।
याम्ये वश्या सदा पातु उन्मादा मारुते सदा ॥ १०० ॥

ईशे महाङ्कुशा पातु त्रिखण्डा पातु चानले ।
नैर्ऋते बीजमुद्रा च ऊर्ध्वे रक्षतु खेचरी ॥ १०१ ॥

महामुद्रा त्वधः पातु योगिनी योनिरूपिणी ।
सुसिद्धयो मुद्रिकाश्च भैरवाः सह मातृभिः ॥ १०२ ॥

एताश्चक्रस्थिता नित्यं सर्वकामफलप्रदाः ।
चतुरश्रे त्रिरेखासु रक्षां कुर्वन्तु सर्वदा ॥ १०३ ॥

सर्वाशापूरकं चक्रं द्वितीयं परिरक्षतु ।
कामाकर्षणरूपा च बुद्ध्याकर्षणरूपिणी ॥ १०४ ॥

अहंकाराकर्षणी च शब्दाकर्षणरूपिणी ।
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ॥ १०५ ॥

रसाकर्षणरूपा च गन्धाकर्षणरूपिणी ।
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ॥ १०६ ॥

स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी ।
बीजाकर्षणरूपा च आत्माकर्षणरूपिणी ॥ १०७ ॥

अमृताकर्षणी देवी शरीराकर्षणी तथा ।
एताश्चक्रस्थिता नित्यं स्वरार्णा षोडशे दले ॥ १०८ ॥

सर्वाभीष्टप्रदा देव्यो रक्षां कुर्वन्तु सर्वदा।
सर्वसंक्षोभणं चक्रं तृतीयं परिरक्षतु ॥ १०९ ॥

अनङ्गकुसुमा पूर्वे दक्षिणेऽनङ्गमेखला।
पश्चिमेऽनङ्गमदना उत्तरे मदनातुरा ॥ ११० ॥

अनङ्गरेखा चाग्नेय्यां नैर्ऋतेऽनङ्गवेगिनी।
वातेऽनङ्गाङ्कुशा चैव ईशे चानङ्गमालिनी ॥ १११ ॥

कवर्गाद्यष्टवर्गस्था अष्टौ चानङ्गशक्तयः।
रक्षां कुर्वन्तु ताः सर्वा देव्याश्चाष्टदले स्थिताः ॥ ११२ ॥

सर्वसौभाग्यदं चक्रं चतुर्थं परिरक्षतु।
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ॥ ११३ ॥

सर्वाकर्षणशक्तिश्च सर्वाह्लादस्वरूपिणी।
सर्वसम्मोहिनी शक्तिः सर्वस्तम्भनरूपिणी ॥ ११४ ॥

सर्वजृम्भणशक्तिश्च सर्वतोवश्यरूपिणी।
सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी ॥ ११५ ॥

सर्वार्थसाधिनी शक्तिः सर्वसंपत्तिपूरणी।
सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयंकरी ॥ ११६ ॥

चतुर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा।
सर्वार्थसाधकं चक्रं पञ्चमं परिरक्षतु ॥ ११७ ॥

सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदायिनी।
सर्वप्रियंकरी शक्तिः सर्वमङ्गलकारिणी ॥ ११८ ॥

सर्वकामप्रदा देवी सर्वदुःखविमोचिनी।
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ॥ ११९ ॥

सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी।
बहिर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा॥ १२० ॥

सर्वरक्षाकरं चक्रं षष्ठं रक्षतु सर्वदा।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा॥ १२१ ॥

सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी।
सर्वाधारस्वरूपा च सर्वपापहरा तथा॥ १२२ ॥

सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी।
तथैव हि महादेवी सर्वेप्सित्फलप्रदा॥ १२३ ॥

अन्तर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा।
सर्वरोगहरं चक्रं सप्तमं परिरक्षतु॥ १२४ ॥

वाग्देवी वशिनी पातु पातु कामेश्वरी च माम्।
मोदिनी विमला पातु अरुणा जयिनी च माम्॥ १२५ ॥

सर्वेश्वरी च मे रक्षां कुरुतां कौलिनी तथा।
वाग्देव्यो वरदाः सन्तु सर्वास्तुष्यन्तु पूजिताः॥ १२६ ॥

अष्टकोणान्तरे वाण्यो रक्षां कुर्वन्तु सर्वदा।
सर्वसिद्धिप्रदं चक्रमष्टमं परिरक्षतु॥ १२७ ॥

अष्टकोणान्तरस्थाने त्रिकोणे बहिरायुधाः।
श्रीमत्पाशाङ्कुशधनुर्बाणाश्चायुधदेवताः॥ १२८ ॥

षडङ्गदेवताः पान्तु अङ्गस्थाश्चाङ्गदेवताः।
महादेव्याश्चक्रसंस्था रक्षां कुर्वन्तु सर्वदा॥ १२९ ॥

श्रीमत्त्रिकोणमध्ये तु तत्र कोणत्रयेषु च।
मध्ये च सर्वदा पान्तु चतस्रः पीठदेवताः॥ १३० ॥

कामे कामेश्वरी पातु पूर्णे वज्रेश्वरी तथा ।
जालन्धरे महापीठे पातु मां भगमालिनी ॥ १३१ ॥

ओड्याणके महापीठे महात्रिपुरसुन्दरी ।
सर्वानन्दमयं चक्रं नवमं परिरक्षतु ॥ १३२ ॥

सूर्येन्दुवह्निपीठे तु बिन्दुचक्रनिवासिनी ।
ब्रह्मस्वरूपिणी पातु श्रीमत्त्रिपुरसुन्दरी ॥ १३३ ॥

योनिमध्ये तु परितो नित्याषोडशशक्तयः ।
देव्याः श्रीचक्रमध्यस्था रक्षां कुर्वन्तु सर्वदा ॥ १३४ ॥

त्रैलोक्यमोहने चक्रे चतुरश्रे सुशोभने ।
पातु मामनिशं देवी त्रिपुरा परमेश्वरी ॥ १३५ ॥

सर्वाशापूरके चक्रे षोडशारे मनोहरे ।
तत्र चक्रेश्वरी नित्यं पातु मां त्रिपुरेश्वरी ॥ १३६ ॥

तथाष्टदलचक्रे तु सर्वसंक्षोभकारके ।
तत्र चक्रेश्वरी नित्यं पायात्त्रिपुरसुन्दरी ॥ १३७ ॥

चतुर्दशारचक्रे तु शुभे सौभाग्यदायके ।
तत्र चक्रेश्वरी नित्यं पायात्त्रिपुरवासिनी ॥ १३८ ॥

सर्वार्थसाधके बाह्ये दशारे चक्रराजके ।
त्रिपुराश्रीः सदा पातु मम कल्याणहेतवे ॥ १३९ ॥

अन्तर्दशारचक्रे तु सर्वरक्षाकरे परे ।
नित्यं चक्रेश्वरी देवी पायात्त्रिपुरमालिनी ॥ १४० ॥

अथाष्टकोणचक्रे तु सर्वरोगहरे परे ।
पातु मां त्रिपुरा सिद्धा देवी चक्रेश्वरी सदा ॥ १४१ ॥

सर्वसिद्धिप्रदे चक्रे गुणकोणे मनोहरे।
चक्रेश्वरी च मे रक्षां करोतु त्रिपुराम्बिका॥ १४२॥

सर्वानन्दमये चक्रे मध्ये बिन्दौ सुशोभने।
महाचक्रेश्वरी पातु श्रीमत्त्रिपुरभैरवी॥ १४३॥

नित्या कामेश्वरी पातु पातु मां भगमालिनी।
नित्यक्लिन्ना च मां पातु भेरुण्डा पातु सर्वदा॥ १४४॥

मां वह्निवासिनी पातु महावज्रेश्वरी तथा।
पातु मां शिवदूती च त्वरिता रक्षयेत्सदा॥ १४५॥

कुलसुन्दरी मां पातु नित्यानित्या च पातु माम्।
नित्या नीलपताका च विजया पातु सर्वदा॥ १४६॥

श्रीसर्वमङ्गला पातु नित्या ज्वालांशुमालिनी।
विचित्रा सर्वदा पातु षोडशी पातु सुन्दरी॥ १४७॥

षोडशी प्रथमा नित्या त्रिपञ्चतिथिगामिनी।
अनुलोमविलोमेन श्रीमत्त्रिपुरसुन्दरी॥ १४८॥

महाविद्या तुरीया तु पातु मां बहुरूपिणी।
महासप्तदशी नित्या नित्यमानन्दरूपिणी॥ १४९॥

पूर्वं दक्षिणपश्चाच्च उत्तरोर्ध्वमनुत्तमम्।
बौद्धवैदिकशैवाश्च सौरवैष्णवशाक्तकाः॥ १५०॥

सृष्टिस्थितिलयाख्यानां वासो रक्षतु सर्वदा।
चतस्रः समयादेव्यो योगिन्यः पान्तु सर्वदा॥ १५१॥

चतुरस्रे महाचक्रे तारा मां परिरक्षतु।
डाकिनी राकिणी पातु लाकिनी काकिनी तथा॥
साकिनी हाकिनी पातु याकिनी सर्वरूपिणी॥ १५२॥

वर्णस्था मातृकाः सर्वा देहस्था मातृकाश्च याः ।
रक्षां कुर्वन्तु ताः सर्वाश्चक्रराजे तु पूजिताः ॥ १५३ ॥

श्रीचक्रे पूजिता या याः पूजिता या न पूजिताः ।
सर्वास्ताः पूजिताः सन्तु श्रीमत्त्रिपुरसुन्दरी ॥ १५४ ॥

चतुरश्रे महाचक्रे बुद्धो मां परिरक्षतु ।
पातु मामनिशं देवः षोडशारे प्रजापतिः ॥ १५५ ॥

तथाष्टदलचक्रे तु शिवो मां परिरक्षतु ।
चतुर्दशारचक्रे तु भास्करो रक्षयेत्सदा ॥ १५६ ॥

द्विदशारे तथा पातु प्रभुर्नारायणो हरिः ।
अष्टारे मध्यचक्रे तु पातु मां भुवनेश्वरी ॥ १५७ ॥

अष्टारान्तस्त्रिकोणे तु कालिका पातु सर्वदा ।
त्रिकोणान्तरचक्रे तु पातु कात्यायनी च माम् ॥ १५८ ॥

नवचक्रेश्वरी नित्या या नित्या परमा कला ।
पातु मामनिशं देवी श्रीमत्त्रिपुरसुन्दरी ॥ १५९ ॥

महात्रिपुरसुन्दर्याश्चिन्तनीया च या परा ।
ब्रह्मस्वरूपिणी पातु पञ्चमी परदेवता ॥ १६० ॥

पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ।
शान्तिं करोतु सा नित्या पञ्चमी परदेवता ॥ १६१ ॥

सा पुनः पञ्चमी शक्तिर्नित्यचैतन्यरूपिणी ।
कारणानन्दमध्यस्था पातु मां पञ्चमी सदा ॥ १६२ ॥

पञ्चतत्त्वं तथा पञ्च यत्किञ्चित् पञ्चमं स्मृतम् ।
नित्यं पञ्चगुणैः पातु पञ्चमी परदेवता ॥ १६३ ॥

पञ्चपञ्चाक्षरैर्मन्त्रैः पञ्चकूटैश्च पञ्चभिः ।
पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ॥ १६४ ॥

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्तिताः ॥ १६५ ॥

श्रीविद्या च परंज्योतिः परा निष्कलशाम्भवी ।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ॥ १६६ ॥

श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा ।
त्रिपुटा पञ्चबाणेशी पञ्चकल्पलताः स्मृताः ॥ १६७ ॥

श्रीविद्याऽमृतपीठेशी सुधासूरमृतेश्वरी ।
अन्नपूर्णेति विख्याता पञ्च कामदुघाः स्मृताः ॥ १६८ ॥

श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराही पञ्चरत्नानामीश्वर्यश्च प्रकीर्तिताः ॥ १६९ ॥

गणेशो वटुकश्चैव क्षेत्रेशो योगिनीगणाः ।
तर्पिता बलिपात्राणि सर्वे रक्षन्तु पूजिताः ॥ १७० ॥

ऐशान्यां सर्वदा पातु नित्यं निर्माल्यवासिनी ।
शेषिका सुन्दरी पातु बिन्दुचक्रनिवासिनी ॥ १७१ ॥

नित्यं कामकला पातु मुद्रा मां पातु खेचरी ।
शक्तिर्मां सर्वदा पातु या मूलाधारवासिनी ॥ १७२ ॥

मुद्रामन्त्रोपचारैस्तु समस्ता देवताश्च याः ।
ताः श्रीश्च पूजिता चास्तु श्रीमत्त्रिपुरसुन्दरी ॥ १७३ ॥

श्रीमत्त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
पूजाक्रमेण कथितं साधकानां सुखावहम् ॥ १७४ ॥

क्रमेणानेन विधिना श्रीमत्त्रिपुरसुन्दरीम्।
संपूज्य साधकश्रेष्ठो रक्षामन्त्रं सदा पठेत्॥ १७५॥

प्रातः काले शुचिर्भूत्वा निशायामर्धरात्रके।
अथवा संकटे प्राप्ते राजस्थाने सुदुर्गमे॥ १७६॥

जले वाऽथ स्थले वापि श्मशाने दुर्गमे गिरौ।
यत्र यत्र भये प्राप्ते स तत्रैव पठेन्नरः॥ १७७॥

सर्वावयवभावेन देवीं संचिन्त्य साधकः।
रक्षां कुर्वीत यत्नेन सर्वाशुभविनाशिनीम्॥ १७८॥

स्तोत्रं चाद्भुतमेवेदं त्रैलोक्ये चापि दुर्लभम्।
गोपनीयं प्रयत्नेन यदीच्छेदात्मनो हितम्॥ १७९॥

यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत्॥ १८०॥

भ्रष्टेभ्यः साधकेभ्योऽपि बान्धवेभ्यो न दर्शयेत्।
दत्ते च सिद्धिहानिः स्यादित्याज्ञा शांकरी कृता॥ १८१॥

मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी।
अशुभं च भवेत्तस्य तस्माद्यत्नेन गोपयेत्॥ १८२॥

यद्गृहे विद्यते स्तोत्रं ग्रन्थे लिखितमुत्तमम्।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति॥ १८३॥

तस्माद्यत्नादिमं ग्रन्थं पूजयेद्गन्धपुष्पकैः।
पूजाफलं लभेन्नित्यं सुन्दरीसन्निधिर्भवेत्॥ १८४॥

स्तवराजमिमं पुण्यं यः पठेत्सुसमाहितः।
यत्फलं लभते तस्माच्छृणुध्वं साधकोत्तमाः॥ १८५॥

वारमेकं तु योऽधीयात् स पूजाफलमश्नुते ।
वेदिता मातृचक्रस्य साधको भुवि जायते ॥ १८६ ॥

मासमेतत्क्रमेणैव पठेद्भक्तिपरायणः ।
स्वर्गेऽपि विदितो भूत्वा देवीभक्तस्तु भूतले ॥ १८७ ॥

भक्त्या च धारयेद्यस्तु लिखित्वा स्तोत्रमुत्तमम् ।
शिखायामथवा कण्ठे बाहौ वा भक्तिसंयुतः ॥ १८८ ॥

स भवेत्साधकश्रेष्ठो मातॄणां च सदा प्रियः ।
लभते सर्वकामान्वै परं स्वस्त्ययनं भवेत् ॥ १८९ ॥

तस्मादिदं प्रयत्नेन धारयेद्विधिना तथा ।
पठित्वा पूजयित्वा च त्रैलोक्यं वशमानयेत् ॥ १९० ॥

भक्ताय ददते तस्मै मन्त्रं रक्षाकरं परम् ।
धृत्वा सौवर्णमध्यस्थां सर्वकामान्नरो लभेत् ॥ १९१ ॥

यानि वाञ्छति कामानि भुक्तिमुक्तिकराणि च ।
लभते नात्र सन्देहो भुवि स्वर्गे रसातले ॥ १९२ ॥

दृष्ट्वा च साधकश्रेष्ठं ग्रहराक्षसहिंसकाः ।
दूरादेव पलायन्ते न समर्थाश्च हिंसितुम् ॥ १९३ ॥

विषं निर्विषतां याति पापं निर्याति संक्षयम् ।
देववन्मानवो भूत्वा भुनक्ति बहुलं सुखम् ॥ १९४ ॥

तस्मान्नित्यं पठेद्धीमान्मुक्तिकामार्थसिद्धये ।
भक्त्या च धारयेद्देवीं स्वरक्षां सर्वदाचरेत् ॥ १९५ ॥

पूर्वजातिपरिज्ञानवेद्यं जन्मसहस्रकम् ।
न पुनर्जायते योनौ मरणं नास्ति चापरम् ॥ १९६ ॥

गन्धर्वरूपवान् भूत्वा संपूज्य परमेश्वरीम् ।
रक्षामन्त्रं पठित्वा च देवत्वं लभते ध्रुवम् ॥ १९७ ॥

अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ।
यं यं वापि स्मरेन्नित्यं तं तमाप्नोति निश्चितम् ॥ १९८ ॥

अतिदुः खालये कष्टे भीमे निगळबन्धने ।
सकृत्पाठे कृते नित्यं निगळान्मुच्यते ध्रुवम् ॥ १९९ ॥

दुष्कृतैरभिचारैश्च रोगैर्यक्ष्मादिभिश्च यः ।
परप्रयुक्तैर्ग्रस्तोऽपि पठनान्मुच्यते नरः ॥ २०० ॥

इमं त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
रक्षामन्त्रं च शुभदं शिवेन परिकीर्तितम् ॥

यः पठेत्प्रयतो भक्त्या सद्यो रोगात्स मुच्यते ॥ २०१ ॥

आयुरारोग्यमैश्वर्यं भुक्तिं मुक्तिं च विन्दति ।
सर्वान्कामानवाप्नोति देवेन्द्रस्यापि दुर्लभान् ॥ २०२ ॥

॥ इति श्रीरुद्रयामले श्रीत्रिपुरास्तवराजः समाप्तः ॥

# श्री भुवनेश्वरी ध्यानम्

१. उद्यदिनद्युतिमिन्दु किरीटां तुङ्गकुचां नयनत्रययुक्ताम्।
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम्।

२. सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्-
तारानायक शेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां वन्दे परामंबिकाम्॥

# श्री भुवनेश्वरी-शतनाम स्तोत्रम्

कैलासशिखरे रम्ये नानारत्नोपशोभिते।
नरनारीहितार्थाय शिवं पप्रच्छ पार्वती॥ १॥

देव्युवाच॥

भुवनेशीमहाविद्यानाम्नामष्टोत्तरं शतम्।
कथयस्व महादेव यद्यहं तव वल्लभा॥ २॥

ईश्वर उवाच॥

शृणु देवि महाभागे स्तवराजमिदं शुभम्।
सहस्रनाम्नामधिकं सिद्धिदं मोक्षहेतुकम्॥ ३॥

शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः।
त्रिकालं श्रद्धया युक्तैः सर्वकामफलप्रदम्॥ ४॥

अस्य श्रीभुवनेश्वर्यष्टोत्तरशतनामस्तोत्रस्य शक्तिर्ऋषिः, गायत्री छन्दः, भुवनेश्वरी देवता, चतुर्वर्गसाधने जपे विनियोगः॥

महामाया महाविद्या महायोगा महोत्कटा।
माहेश्वरी कुमारी च ब्रह्माणी ब्रह्मरूपिणी॥ ५॥

वागीश्वरी योगरूपा योगिनीकोटिसेविता।
जया च विजया चैव कौमारी सर्वमङ्गला॥ ६॥

हिङ्गुला च विलासी च ज्वालिनी ज्वालरूपिणी।
ईश्वरी क्रूरसंहारी कुलमार्गप्रदायिनी॥ ७॥

वैष्णवी सुभगाकारा सुकुल्या कुलपूजिता।
वामाङ्गा वामचारा च वामदेवप्रिया तथा॥ ८॥

डाकिनी योगिनीरूपा भूतेशी भूतनायिका।
पद्मावती पद्मनेत्रा प्रबुद्धा च सरस्वती॥ ९॥

भूचरी खेचरी माया मातङ्गी भुवनेश्वरी।
कान्ता पतिव्रता साक्षी सुचक्षुः कुंडवासिनी॥ १०॥

उमा कुमारी लोकेशी सुकेशी पद्मरागिणी।
इन्द्राणी ब्रह्मचाण्डाली चण्डिका वायुवल्लभा॥ ११॥

सर्वधातुमयी मूर्तिर्जलरूपा जलोदरी।
आकाशी रणगा चैव नृकपालविभूषणा॥ १२॥

नर्मदा मोक्षदा चैव धर्मकामार्थदायिनी।
गायत्री चाथ सावित्री त्रिसन्ध्या तीर्थगामिनी॥ १३॥

अष्टमी नवमी चैव दशम्येकादशी तथा।
पौर्णमासी कुहूरूपा तिथिमूर्तिस्वरूपिणी॥ १४॥

सुरारिनाशकारी च उग्ररूपा च वत्सला।
अनला अर्धमात्रा च अरुणा पीतलोचना॥ १५॥

लज्जा सरस्वती विद्या भवानी पापनाशिनी।
नागपाशधरा मूर्तिरगाधा धृतकुण्डला॥ १६॥

क्षत्ररूपा क्षयकरी तेजस्विनी शुचिस्मिता ।
अव्यक्ता व्यक्तलोका च शम्भुरूपा मनस्विनी ॥ १७ ॥

मातङ्गी मत्तमातङ्गी महादेवप्रिया सदा ।
दैत्यहा चैव वाराही सर्वशास्त्रमयी शुभा ॥ १८ ॥

य इदं पठते भक्त्या शृणुयाद्वा समाहितः ।
अपुत्रो लभते पुत्रं निर्धनो धनवान् भवेत् ॥ १९ ॥

मूर्खोपि लभते शास्त्रं चोरोपि लभते गतिम् ।
वेदानां पाठको विप्रः क्षत्रियो विजयी भवेत् ॥ २० ॥

वैश्यस्तु धनवान्भूयाच्छूद्रस्तु सुखमेधते ।
अष्टम्याञ्च चतुर्दश्यां नवम्यां चैकचेतसः ॥ २१ ॥

ये पठन्ति सदा भक्त्या न ते वै दुःखभागिनः ।
एककालं द्विकालं वा त्रिकालं वा चतुर्थकम् ॥ २२ ॥

ये पठन्ति सदा भक्त्या स्वर्गलोके च पूजिताः ।
रुद्रं दृष्ट्वा यथा देवाः पन्नगा गरुडं यथा ॥ २३ ॥

शत्रवः प्रपलायन्ते तस्य वक्त्रविलोकनात् ।

इति श्रीरुद्रयामले देवीशङ्करसंवादे भुवनेश्वर्यष्टोत्तरशतनामस्तोत्रम्

## श्रीभुवनेश्वरीसहस्रनामस्तोत्रम्-भकारादि

अस्य श्रीभुवनेश्वरीसहस्रनाममन्त्रस्य सदाशिव ऋषिः, अनुष्टुप् छन्दः, भुवनेश्वरी देवता, लज्जा (ह्रीं) बीजम् ,कमला(श्रीं)शक्तिः वाग्भवं(ऐं)कीलकम्, सर्वार्थसाधने जपे विनियोगः ।

भुवनेशी भुवाराध्या भवानी भयनाशिनी ।
भवरूपा भवानन्दा भवसागरतारिणी ॥ १ ॥

भवोद्भवा भवरता भवभारनिवारिणी।
भव्यास्या भव्यनयना भव्यरूपा भवौषधिः ॥ २ ॥

भव्याङ्गना भव्यकेशी भवपाशविमोचिनी।
भव्यासना भव्यवस्त्रा भव्याभरणभूषिता ॥ ३ ॥

भगरूपा भगानन्दा भगेशी भगमालिनी।
भगविद्या भगवती भगक्लिन्ना भगावहा ॥ ४ ॥

भगाङ्कुरा भगक्रीडा भगाद्या भगमङ्गला।
भगलीला भगप्रीता भगसम्पद्भगेश्वरी ॥ ५ ॥

भगालया भगोत्साहा भगस्था भगपोषिणी।
भगोत्सवा भगविद्या भगमाता भगस्थिता ॥ ६ ॥

भगशक्तिर्भगनिधिर्भगपूजा भगेषणा।
भगस्वापा भगाधीशा भगार्च्या भगसुन्दरी ॥ ७ ॥

भगरेखा भगस्नेहा भगस्नेहविवर्धिनी।
भगिनी भगबीजस्था भगभोगविलासिनी ॥ ८ ॥

भगाचारा भगाधारा भगाकारा भगाश्रया।
भगपुष्पा भगश्रीदा भगपुष्पनिवासिनी ॥ ९ ॥

भव्यरूपधरा भव्या भव्यपुष्पैरलंकृता।
भव्यलीला भव्यमाला भव्याङ्गी भव्यसुन्दरी ॥ १० ॥

भव्यशीला भव्यलीला भव्याक्षी भव्यनाशिनी।
भव्याङ्गिका भव्यवाणी भव्यकान्तिर्भगालिनी ॥ ११ ॥

भव्यत्रपा भव्यनदी भव्यभोगविहारिणी।
भव्यस्तनी भव्यमुखी भव्यगोष्ठी भयापहा ॥ १२ ॥

भक्तेश्वरी भक्तिकरी भक्तानुग्रहकारिणी ।
भक्तिदा भक्तिजननी भक्तानन्दविवर्धिनी ॥ १३ ॥

भक्तिप्रिया भक्तिरता भक्तिभावविहारिणी ।
भक्तिशीला भक्तिलीला भक्तेशी भक्तिपालिनी ॥ १४ ॥

भक्तिविद्या भक्तविद्या भक्तिर्भक्तिविनोदिनी ।
भक्तिरीतिर्भक्तिप्रीतिर्भक्तिसाधनसाधिनी ॥ १५ ॥

भक्तिसाध्या भक्तसाध्या भक्तिराली भवेश्वरी ।
भटविद्या भटानन्दा भटस्था भटरूपिणी ॥ १६ ॥

भटमान्या भटस्थान्या भटस्थाननिवासिनी ।
भटिनी भटरूपेशी भटरूपविवर्धिनी ॥ १७ ॥

भटवेशी भटेशी च भगभाग्भगसुन्दरी ।
भटप्रीत्या भटरीत्या भटानुग्रहकारिणी ॥ १८ ॥

भटाराध्या भटाबोध्या भटबोधविनोदिनी ।
भटैस्सेव्या भटवरा भटार्च्या भटबोधिनी ॥ १९ ॥

भटकीर्त्या भटकला भटपा भटपालिनी ।
भटैश्वर्या भटाधीशा भटेक्षा भटतोषिणी ॥ २० ॥

भटेशी भटजननी भटभाग्यविवर्धिनी ।
भटमुक्तिर्भटयुक्तिर्भटप्रीतिविवर्धिनी ॥ २१ ॥

भाग्येशी भाग्यजननी भाग्यस्था भाग्यरूपिणी ।
भावना भावकुशला भावदा भाववर्धिनी ॥ २२ ॥

भावरूपा भावरसा भावान्तरविहारिणी ।
भावाङ्कुरा भावकला भावस्थाननिवासिनी ॥ २३ ।

भावातुरा भावधृता भावमध्यव्यवस्थिता।
भावऋद्धिर्भावसिद्धिर्भावादिर्भावभाविनी ॥ २४ ॥

भावालया भावपरा भावसाधनतत्परा।
भावेश्वरी भावगम्या भावस्था भावगर्विता ॥ २५ ॥

भाविनी भावरमणी भारती भारतेश्वरी।
भागीरथी भाग्यवती भाग्योदयकरी कला ॥ २६ ॥

भाग्याश्रया भाग्यमयी भाग्या भाग्यफलप्रदा।
भाग्याचारा भाग्यसारा भाग्यधारा च भाग्यदा ॥ २७ ॥

भाग्येश्वरी भाग्यनिधिर्भाग्या भाग्यसुमातृका।
भाग्येक्षा भाग्यना भाग्यभाग्यदा भाग्यमातृका ॥ २८ ॥

भाग्येक्षा भाग्यमनसा भाग्यादिर्भाग्यमध्यगा।
भ्रात्रीश्वरी भ्रातृमती भ्रात्रम्बा भ्रातृपालिनी ॥ २९ ॥

भ्रातृस्था भ्रातृकुशला भ्रामरी भ्रमराम्बिका।
भिल्लरूपा भिल्लवती भिल्लस्था भिल्लपालिनी ॥ ३० ॥

भिल्लमाता भिल्लधात्री भिल्लिनी भिल्लकेश्वरी।
भिल्लकीर्त्तिर्भिल्लकला भिल्लमन्दिरवासिनी ॥ ३१ ॥

भिल्लक्रीडा भिल्लीला भिल्लार्च्या भिल्लवल्लभा।
भिल्लस्नुषा भिल्लपुत्री भिल्लिनी भिल्लपोषिणी ॥ ३२ ॥

भिल्लपौत्री भिल्लगोष्ठी भिल्लाचारनिवासिनी।
भिल्लपूज्या भिल्लवाणी भिल्लानी भिल्लभीतिहा ॥ ३३ ॥

भीतस्था भीतजननी भीतिर्भीतिविनाशिनी।
भीतिदा भीतिहा भीत्या भीत्याकारविहारिणी ॥ ३४ ॥

भीतेशी भीतिशमनी भीतस्थाननिवासिनी।
भीतिरीत्या भीतिकला भीतीक्षा भीतिहारिणी॥ ३५॥

भीमेशी भीमजननी भीमा भीमनिवासिनी।
भीमेश्वरी भीमरता भीमाङ्गी भीमपालिनी॥ ३६॥

भीमनादा भीमतन्त्री भीमैश्वर्यविवर्धिनी।
भीमगोष्ठी भीमधात्री भीमविद्याविनोदिनी॥ ३७॥

भीमविक्रमदात्री च भीमविक्रमवासिनी।
भीमानन्दकरी देवी भीमानन्दविहारिणी॥ ३८॥

भीमोपदेशिनी नित्या भीमभाग्यप्रदायिनी।
भीमसिद्धिर्भीमऋद्धिर्भीमभक्तिविवर्धिनी॥ ३९॥

भीमस्था भीमवरदा भीमधर्मोपदेशिनी।
भीष्मेश्वरी भीष्मभृतिर्भीष्मबोधप्रबोधिनी॥ ४०॥

भीष्मश्रीर्भीष्मजननी भीष्मज्ञानोपदेशिनी।
भीष्मस्था भीष्मतपसा भीष्मेशी भीष्मतारिणी॥ ४१॥

भीष्मलीला भीष्मशीला भीष्मरोधोनिवासिनी।
भीष्माश्रया भीष्मवरा भीष्महर्षविवर्धिनी॥ ४२॥

भुवना भुवनेशानी भुवनानन्दकारिणी।
भुविस्था भुविरूपा च भुविभारनिवारिणी॥ ४३॥

भुक्तिस्था भुक्तिदा भुक्तिर्भुक्तेशी भुक्तिरूपिणी।
भुक्तेश्वरी भुक्तिदात्री भुक्तिराकाररूपिणी॥ ४४॥

भुजङ्गस्था भुजङ्गेशी भुजङ्गाकाररूपिणी।
भुजङ्गी भुजगावासा भुजङ्गानन्ददायिनी॥ ४५॥

भूतेशी भूतजननी भूतस्था भूतरूपिणी।
भूतेश्वरी भूतलीला भूतवेषकरी सदा ॥ ४६ ॥

भूतदात्री भूतकेशी भूतधात्री महेश्वरी।
भूतरीत्या भूतपत्नी भूतलोकनिवासिनी ॥ ४७ ॥

भूतसिद्धिर्भूतऋद्धिर्भूतानन्दनिवासिनी।
भूतकीर्तिर्भूतलक्ष्मीर्भूतभाग्यविवर्धिनी ॥ ४८ ॥

भूतार्च्या भूतरमणी भूतविद्याविनोदिनी।
भूतपौत्री भूतपुत्री भूतभार्या विधीश्वरी ॥ ४९ ॥

भूतस्था भूतरमणी भूतेशी भूतपालिनी।
भूपमाता भूपनिभा भूपैश्वर्यप्रदायिनी ॥ ५० ॥

भूपचेष्टा भूपनिष्ठा भूपभवविवर्धिनी।
भूपस्वसा भूपभूरी भूपपौत्री तथा वधूः ॥ ५१ ॥

भूपकीर्त्तिर्भूपनीतिर्भूपभाग्यविवर्धिनी।
भूपक्रिया भूपक्रीडा भूपमन्दिरवासिनी ॥ ५२ ॥

भूपार्च्या भूपसंराध्या भूपभोगविवर्धिनी।
भूपाश्रया भूपकला भूपकौतुकदण्डिनी ॥ ५३ ॥

भूषणस्था भूषणेशी भूषा भूषणधारिणी।
भूषणाधारधर्मेशी भूषणाकाररूपिणी ॥ ५४ ॥

भूपताचारनिलया भूपताचारभूषिता।
भूपताचाररचना भूपताचारमण्डिता ॥ ५५ ॥

भूपताचारधर्मेशी भूपताचारकारिणी।
भूपताचारचरिता भूपताचारवर्जिता ॥ ५६ ॥

भूपताचारवृद्धिस्था भूपताचारवृद्धिदा ।
भूपताचारकरणा भूपताचारकर्मदा ॥ ५७ ॥

भूपताचारकर्मेशी भूपताचारकर्मदा ।
भूपताचारदेहस्था भूपताचारकर्मिणी ॥ ५८ ॥

भूपताचारसिद्धिस्था भूपताचारसिद्धिदा ।
भूपताचारधर्माणी भूपताचारधारिणी ॥ ५९ ॥

भूपतानन्दलहरी भूपतेश्वररूपिणी ।
भूपतेर्नीतिनीतिस्था भूपतिस्थानवासिनी ॥ ६० ॥

भूपतिस्थानगीर्वाणी भूपतेर्वरधारिणी ॥ ६१ ॥

भेषजानन्दलहरी भेषजानन्दरूपिणी ।
भेषजानन्दमहिषी भेषजानन्दधारिणी ॥ ६२ ॥

भेषजानन्दकर्मेशी भेषजानन्ददायिनी ।
भैषजी भैषजाकन्दा भेषजस्थानवासिनी ॥ ६३ ॥

भेषजेश्वररूपा च भेषजेश्वरसिद्धिदा ।
भेषजेश्वरधर्मेशी भेषजेश्वरकर्मदा ॥ ६४ ॥

भेषजेश्वरकर्मेशी भेषजेश्वरकर्मिणी ।
भेषजाधीशजननी भेषजाधीशपालिनी ॥ ६५ ॥

भेषजाधीशरचना भेषजाधीशमङ्गला ।
भेषजारण्यमध्यस्था भेषजारण्यरक्षिणी ॥ ६६ ॥

भैषज्यविद्या भैषज्या भैषज्येप्सितदायिनी ।
भैषज्यस्था भैषजेशी भैषज्यानन्दवर्धिनी ॥ ६७ ॥

भैरवी भैरवाचारा भैरवाकाररूपिणी ।
भैरवाचारचतुरा भैरवाचारमण्डिता ॥ ६८ ॥

भैरवा भैरवेशी च भैरवानन्ददायिनी ।
भैरवानन्दरूपेशी भैरवानन्दरूपिणी ॥ ६९ ॥

भैरवानन्दनिपुणा भैरवानन्दमन्दिरा ।
भैरवानन्दतत्त्वज्ञा भैरवानन्दतत्परा ॥ ७० ॥

भैरवानन्दकुशला भैरवानन्दनीतिदा ।
भैरवानन्दप्रीतिस्था भैरवानन्दप्रीतिदा ॥ ७१ ॥

भैरवानन्दमहिषी भैरवानन्दमालिनी ।
भैरवानन्दमतिदा भैरवानन्दमातृका ॥ ७२ ॥

भैरवाधारजननी भैरवाधाररक्षिणी ।
भैरवाधाररूपेशी भैरवाधाररूपिणी ॥ ७३ ॥

भैरवाधारनिचया भैरवाधारनिश्चया ।
भैरवाधारतत्त्वज्ञा भैरवाधारतत्त्वदा ॥ ७४ ॥

भैरवाश्रयतन्त्रेशी भैरवाश्रयमन्त्रिणी ।
भैरवाश्रयरचना भैरवाश्रयरञ्जिता ॥ ७५ ॥

भैरवाश्रयनिर्भारा भैरवाश्रयनिर्भरा ।
भैरवाश्रयनिर्धारा भैरवाश्रयनिर्धरा ॥ ७६ ॥

भैरवानन्दबोधेशी भैरवानन्दबोधिनी ।
भैरवानन्दबोधस्था भैरवानन्दबोधदा ॥ ७७ ॥

भैरव्यैश्वर्यवरदा भैरव्यैश्वर्यदायिनी ।
भैरव्यैश्वर्यरचना भैरव्यैश्ववर्यवर्धिनी ॥ ७८ ॥

भैरव्यैश्वर्यसिद्धिस्था भैरव्यैश्वर्यसिद्धिदा ।
भैरव्यैश्वर्यसिद्धेशी भैरव्यैश्वर्यरूपिणी ॥ ७९ ॥

भैरव्यैश्वर्यसुपथा भैरव्यैश्वर्यसुप्रभा ।
भैरव्यैश्वर्यवृद्धिस्था भैरव्यैश्वर्यवृद्धिदा ॥ ८० ॥

भैरव्यैश्वर्यकुशला भैरव्यैश्वर्यकामदा ।
भैरव्यैश्वर्यसुलभा भैरव्यैश्वर्यसम्प्रदा ॥ ८१ ॥

भैरव्यैश्वर्यविशदा भैरव्यैश्वर्यविक्रिया ।
भैरव्यैश्वर्यविनया भैरव्यैश्वर्यवेदिता ॥ ८२ ॥

भैरव्यैश्वर्यमहिमा भैरव्यैश्वर्यमानिनी ।
भैरव्यैश्वर्यनिरता भैरव्यैश्वर्यनिर्मिता ॥ ८३ ॥

भोगेश्वरी भोगमाता भोगस्था भोगरक्षिणी ।
भोगक्रीडा भोगलीला भोगेशी भोगवर्धिनी ॥ ८४ ॥

भोगाङ्गी भोगरमणी भोगाचारविचारिणी ।
भोगाश्रया भोगवती भोगिनी भोगरूपिणी ॥ ८५ ॥

भोगाङ्कुरा भोगविधा भोगाधारनिवासिनी ।
भोगाम्बिका भोगरता भोगसिद्धिविधायिनी ॥ ८६ ॥

भोजस्था भोजनिरता भोजनानन्ददायिनी ।
भोजनानन्दलहरी भोजनान्तर्विहारिणी ॥ ८७ ॥

भोजनानन्दमहिमा भोजनानन्दभोग्यदा ।
भोजनानन्दरचना भोजनानन्दहर्षिता ॥ ८८ ॥

भोजनाचारचतुरा भोजनाचारमण्डिता ।
भोजनाचारचरिता भोजनाचारचर्चिता ॥ ८९ ॥

भोजनाचारसम्पन्ना भोजनाचारसंयुता ।
भोजनाचारचित्तस्था भोजनाचाररीतिदा ॥ ९० ॥

भोजनाचारविभवा भोजनाचारविस्तृता ।
भोजनाचाररमणी भोजनाचाररक्षिणी ॥ ९१ ॥

भोजनाचारहरिणी भोजनाचारभक्षिणी ।
भोजनाचारसुखदा भोजनाचारसुस्पृहा ॥ ९२ ॥

भोजनाहारसुरसा भोजनाहारसुन्दरी ।
भोजनाहारचरिता भोजनाहारचञ्चला ॥ ९३ ॥

भोजनास्वादविभवा भोजनास्वादवल्लभा ।
भोजनास्वादसन्तुष्टा भोजनास्वादसम्प्रदा ॥ ९४ ॥

भोजनास्वादसुपथा भोजनास्वादसंश्रया ।
भोजनास्वादनिरता भोजनास्वादनिर्णिता ॥ ९५ ॥

भौक्षरा भौक्षरेशानी भौकाराक्षररूपिणी ।
भौक्षरस्था भौक्षरादिर्भौक्षरस्थानवासिनी ॥ ९६ ॥

भङ्कारी भर्मिणी भर्मी भस्मेशी भस्मरूपिणी ।
भङ्कारा भञ्जना भस्मा भस्मस्था भस्मवासिनी ॥ ९७ ॥

भक्षरी भक्षराकारा भक्षरस्थानवासिनी ।
भक्षराढ्या भक्षरेशी भरूपा भस्वरूपिणी ॥ ९८ ॥

भूधरस्था भूधरेशी भूधरी भूधरेश्वरी ।
भूधरानन्दरमणी भूधरानन्दपालिनी ॥ ९९ ॥

भूधरानन्दजननी भूधरानन्दवासिनी ।
भूधरानन्दरमणी भूधरानन्दरक्षिता ॥ १०० ॥

भूधरानन्दमहिमा भूधरानन्दमन्दिरा।
भूधरानन्दसर्वेशी भूधरानन्दसर्वसूः ॥ १०१ ॥

भूधरानन्दमहिषी भूधरानन्ददायिनी।
भूधराधीशधर्मेशी भूधरानन्दधर्मिणी ॥ १०२ ॥

भूधराधीशधर्मेशी भूधराधीशसिद्धिदा।
भूधराधीशकर्मेशी भूधराधीशकामिनी ॥ १०३ ॥

भूधराधीशनिरता भूधराधीशनिर्णिता।
भूधराधीशनीतिस्था भूधराधीशनीतिदा ॥ १०४ ॥

भूधराधीशभाग्येशी भूधराधीशभामिनी।
भूधराधीशबुद्धिस्था भूधराधीशबुद्धिदा ॥ १०५ ॥

भूधराधीशवरदा भूधराधीशवन्दिता।
भूधराधीशसंराध्या भूधराधीशचर्चिता ॥ १०६ ॥

भङ्गेश्वरी भङ्गमयी भङ्गस्था भङ्गरूपिणी।
भङ्गाक्षता भङ्गरता भङ्गार्च्या भङ्गरक्षिणी ॥ १०७ ॥

भङ्गावती भङ्गलीला भङ्गभोगविलासिनी।
भङ्गरङ्गप्रतीकाशा भङ्गरङ्गनिवासिनी ॥ १०८ ॥

भङ्गाशिनी भङ्गमूली भङ्गभोगविधायिनी।
भङ्गाश्रया भङ्गबीजा भङ्गबीजाङ्कुरेश्वरी ॥ १०९ ॥

भङ्गयन्त्रचमत्कारा भङ्गयन्त्रेश्वरी तथा।
भङ्गयन्त्रविमोहस्था भङ्गयन्त्रविनोदिनी ॥ ११० ॥

भङ्गयन्त्रविचारस्था भङ्गयन्त्रविचारिणी।
भङ्गयन्त्ररसानन्दा भङ्गयन्त्ररसेश्वरी ॥ १११ ॥

भङ्ग्यन्त्ररसास्वादा भङ्ग्यन्त्ररसस्थिता।
भङ्ग्यन्त्ररसाधारा भङ्ग्यन्त्ररसाश्रया॥ ११२॥

भूधरात्मजरूपेशी भूधरात्मजरूपिणी।
भूधरात्मजयोगेशी भूधरात्मजपालिनी॥ ११३॥

भूधरात्मजमहिमा भूधरात्मजमालिनी।
भूधरात्मजभूतेशी भूधरात्मजरूपिणी॥ ११४॥

भूधरात्मजसिद्धिस्था भूधरात्मजसिद्धिदा।
भूधरात्मजभावेशी भूधरात्मजभाविनी॥ ११५॥

भूधरात्मजभोगस्था भूधरात्मजभोगदा।
भूधरात्मजभोगेशी भूधरात्मजभोगिनी॥ ११६॥

भव्या भव्यतरा भव्याभाविनी भववल्लभा।
भावातिभावा भावाख्या भातिभा भीतिभान्तिका॥ ११७॥

भासान्तिभासा भासस्था भासामा भास्करोपमा।
भास्करस्था भास्करेशी भास्करैश्वर्यवर्धिनी॥ ११८॥

भास्करानन्दजननी भास्करानन्ददायिनी।
भास्करानन्दमहिमा भास्करानन्दमातृका॥ ११९॥

भास्करानन्दनैश्वर्या भास्करानन्दनेश्वरा।
भास्करानन्दसुपथा भास्करानन्दसुप्रभा॥ १२०॥

भास्करानन्दनिचया भास्करानन्दनिर्मिता।
भास्करानन्दनीतिस्था भास्करानन्दनीतिदा॥ १२१॥

भास्करोदयमध्यस्था भास्करोदयमध्यगा।
भास्करोदयतेजःस्था भास्करोदयतेजसा॥ १२२॥

भास्कराचारचतुरा भास्कराचारचन्द्रिका।
भास्कराचारपरभा भास्कराचारचण्डिका॥ १२३ ॥

भास्कराचारपरमा भास्कराचारपारदा।
भास्कराचारमुक्तिस्था भास्कराचारमुक्तिदा॥ १२४ ॥

भास्कराचारसिद्धिस्था भास्कराचारसिद्धिदा।
भास्कराचरणाधारा भास्कराचरणाश्रिता॥ १२५ ॥

भास्कराचारमन्त्रेशी भास्कराचारमन्त्रिणी।
भास्कराचारवित्तेशी भास्कराचारचित्रिणी॥ १२६ ॥

भास्कराधारधर्मेशी भास्कराधारधारिणी।
भास्कराधाररचना भास्कराधाररक्षिता॥ १२७ ॥

भास्कराधारकर्माणी भास्कराधारकर्मदा।
भास्कराधाररूपेशी भास्कराधाररूपिणी॥ १२८ ॥

भास्कराधारकाम्येशी भास्काराधारकामिनी।
भास्कराधारसांशेशी भास्कराधारसांशिनी॥ १२९ ॥

भास्कराधारधर्मेशी भास्कराधारधामिनी।
भास्कराधारचक्रस्था भास्कराधारचक्रिणी॥ १३० ॥

भास्करेश्वरक्षेत्रेशी भास्करेश्वरक्षेत्रिणी।
भास्करेश्वरजननी भास्करेश्वरपालिनी॥ १३१ ॥

भास्करेश्वरसर्वेशी भास्करेश्वरशर्वरी।
भास्करेश्वरसद्धीमा भास्करेश्वरसन्निभा॥ १३२ ॥

भास्करेश्वरसुपथा भास्करेश्वरसुप्रभा।
भास्करेश्वरयुवती भास्करेश्वरसुन्दरी॥ १३३ ॥

भास्करेश्वरमूर्तेशी भास्करेश्वरमूर्तिनी ।
भास्करेश्वरमित्रेशी भास्करेश्वरमन्त्रिणी ॥ १३४ ॥

भास्करेश्वरसानन्दा भास्करेश्वरसाश्रया ।
भास्करेश्वरचित्रस्था भास्करेश्वरचित्रदा ॥ १३५ ॥

भास्करेश्वरचित्रेशी भास्करेश्वरचित्रिणी ।
भास्करेश्वरभाग्यस्था भास्करेश्वरभाग्यदा ॥ १३६ ॥

भास्करेश्वरभाग्येशी भास्करेश्वरभाविनी ।
भास्करेश्वरकीर्त्त्येशी भास्करेश्वरकीर्त्तिनी ॥ १३७ ॥

भास्करेश्वरकीर्त्तिस्था भास्करेश्वरकीर्त्तिदा ।
भास्करेश्वरकरुणा भास्करेश्वरकारिणी ॥ १३८ ॥

भास्करेश्वरगीर्वाणी भास्करेश्वरगारुडी ।
भास्करेश्वरदेहस्था भास्करेश्वरदेहदा ॥ १३९ ॥

भास्करेश्वरनादस्था भास्करेश्वरनादिनी ।
भास्करेश्वरनादेशी भास्करेश्वरनादिनी ॥ १४० ॥

भास्करेश्वरकोशस्था भास्करेश्वरकोशदा ।
भास्करेश्वरकोशेशी भास्करेश्वरकोशिनी ॥ १४१ ॥

भास्करेश्वरशक्तिस्था भास्करेश्वरशक्तिदा ।
भास्करेश्वरतोषेशी भास्करेश्वरतोषिणी ॥ १४२ ॥

भास्करेश्वरक्षेत्रेशी भास्करेश्वरक्षेत्रिणी ।
भास्करेश्वरयोगस्था भास्करेश्वरयोगदा ॥ १४३ ॥

भास्करेश्वरयोगेशी भास्करेश्वरयोगिनी ।
भास्करेश्वरपद्मेशी भास्करेश्वरपद्मिनी ॥ १४४ ॥

भास्करेश्वरहृद्बीजा भास्करेश्वरहृद्वरा ।
भास्करेश्वरहृद्योनिर्भास्करेश्वरहृद्द्युतिः ॥ १४५ ॥

भास्करेश्वरबुद्धिस्था भास्करेश्वरसद्विधा ।
भास्करेश्वरसद्वाणी भास्करेश्वरसद्वरा ॥ १४६ ॥

भास्करेश्वरराज्यस्था भास्करेश्वरराज्यदा ।
भास्करेश्वरराज्येशी भास्करेश्वरपोषिणी ॥ १४७ ॥

भास्करेश्वरज्ञानस्था भास्करेश्वरज्ञानदा ।
भास्करेश्वरज्ञानेशी भास्करेश्वरगामिनी ॥ १४८ ॥

भास्करेश्वरलक्षेशी भास्करेश्वरक्षालिता ।
भास्करेश्वरलक्षिता भास्करेश्वररक्षिता ॥ १४९ ॥

भास्करेश्वरखड्गस्था भास्करेश्वरखड्गदा ।
भास्करेश्वरखड्गेशी भास्करेश्वरखड्गिनी ॥ १५० ॥

भास्करेश्वरकार्येशी भास्करेश्वरकामिनी ।
भास्करेश्वरकायस्था भास्करेश्वरकायदा ॥ १५१ ॥

भास्करेश्वरचक्षुःस्था भास्करेश्वरचक्षुषा ।
भास्करेश्वरसन्नाभा भास्करेश्वरसार्चिता ॥ १५२ ॥

भ्रूणहत्याप्रशमनी भ्रूणपापविनाशिनी ।
भ्रूणदारिद्र्यशमनी भ्रूणरोगविनाशिनी ॥ १५३ ॥

भ्रूणशोकप्रशमनी भ्रूणदोषनिवारिणी ।
भ्रूणसन्तापशमनी भ्रूणविभ्रमनाशिनी ॥ १५४ ॥

भवाब्धिस्था भवाब्धीशा भवाब्धिभयनाशिनी ।
भवाब्धिपारकरणी भवाब्धिसुखवर्धिनी ॥ १५५ ॥

भवाब्धिवकार्यकरणी भवाब्धिकरुणानिधिः ।
भवाब्धिकालशमनी भवाब्धिवरदायिनी ॥ १५६ ॥

भवाब्धिभजनस्थाना भवाब्धिभजनस्थिता ।
भवाब्धिभजनाकारा भवाब्धिभजनक्रिया ॥ १५७ ॥

भवाब्धिभजनाचारा भवाब्धिभजनाङ्कुरा ।
भवाब्धिभजनानन्दा भवाब्धिभजनाधिपा ॥ १५८ ॥

भवाब्धिभजनैश्वर्या भवाब्धिभजनेश्वरी ।
भवाब्धिभजनासिद्धिर्भवाब्धिभजनारतिः ॥ २५९ ॥

भवाब्धिभजनानित्या भवाब्धिभजनानिशा ।
भवाब्धिभजनानिम्ना भवाब्धिभवभीतिहा ॥ १६० ॥

भवाब्धिभजनाकाम्या भवाब्धिभजनाकला ।
भवाब्धिभजनाकीर्त्तिर्भवाब्धिभजनाकृता ॥ १६१ ॥

भवाब्धिशुभदा नित्या भवाब्धिशुभदायिनी ।
भवाब्धिसकलानन्दा भवाब्धिसकलाकला ॥ १६२ ॥

भवाब्धिसकलासिद्धिर्भवाब्धिसकलानिधिः ।
भवाब्धिसकलासारा भवाब्धिसकलार्थदा ॥ १६३ ॥

भवाब्धिभवनामूर्तिर्भवाब्धिभवनाकृतिः ।
भवाब्धिभवनाभव्या भवाब्धिभवनाम्भसा ॥ १६४ ॥

भवाब्धिमदनारूपा भवाब्धिमदनातुरा ।
भवाब्धिमदनेशानी भवाब्धिमदनेश्वरी ॥ १६५ ॥

भवाब्धिभाग्यरचना भवाब्धिभाग्यदा सदा ।
भवाब्धिभाग्यदाकूला भवाब्धिभाग्यनिर्भरा ॥ १६६ ॥

भवाब्धिभाग्यनिरता भवाब्धिभाग्यभाविता।
भवाब्धिभाग्यसञ्चारा भवाब्धिभाग्यसञ्चिता॥ १६७॥

भवाब्धिभाग्यसुपथा भवाब्धिभाग्यसुप्रदा।
भवाब्धिभाग्यरीतिज्ञा भवाब्धिभाग्यनीतिदा॥ १६८॥

भवाब्धिभाग्यरीत्येशी भवाब्धिभाग्यरीतिनी।
भवाब्धिभोगनिपुणा भवाब्धिभोगसम्प्रदा॥ १६९॥

भवाब्धिभाग्यगहना भवाब्धिभोग्यगुम्फिता।
भवाब्धिभोगगान्धारी भवाब्धिभोगगुम्फिता॥ १७०॥

भवाब्धिभोगसुरसा भवाब्धिभोगसुस्पृहा।
भवाब्धिभोगग्रथिनी भवाब्धिभोगयोगिनी॥ १७१॥

भवाब्धिभोगरसना भवाब्धिभोगराजिता।
भवाब्धिभोगविभवा भवाब्धिभोगविस्तृता॥ १७२॥

भवाब्धिभोगवरदा भवाब्धिभोगवन्दिता।
भवाब्धिभोगकुशला भवाब्धिभोगशोभिता॥ १७३॥

भवाब्धिभेदजननी भवाब्धिभेदपालिनी।
भवाब्धिभेदरचना भवाब्धिभेदरक्षिता॥ १७४॥

भवाब्धिभेदनियता भवाब्धिभेदनिस्पृहा।
भवाब्धिभेदरचना भवाब्धिभेदरोषिता॥ १७५॥

भवाब्धिभेदराशिघ्नी भवाब्धिभेदराशिनी।
भवाब्धिभेदकर्मेशी भवाब्धिभेदकर्मिणी॥ १७६॥

भद्रेशी भद्रजननी भद्रा भद्रनिवासिनी।
भद्रेश्वरी भद्रवती भद्रस्था भद्रदायिनी॥ १७७॥

भद्ररूपा भद्रमयी भद्रदा भद्रभाषिणी ।
भद्रकर्णा भद्रवेशा भद्राम्बा भद्रमन्दिरा ॥ १७८ ॥

भद्रक्रिया भद्रकला भद्रिका भद्रवर्धिनी ।
भद्रक्रीडा भद्रकला भद्रलीलाभिलाषिणी ॥ १७९ ॥

भद्राङ्कुरा भद्ररता भद्राङ्गी भद्रमन्त्रिणी ।
भद्राविद्या भद्रविद्या भद्रवाग्भद्रवादिनी ॥ १८० ॥

भूपमङ्गलदा भूपा भूलता भूमिवाहिनी ।
भूपभोगा भूपशोभा भूपाशा भूपरूपदा ॥ १८१ ॥

भूपाकृतिर्भूतपतिर्भूपश्रीर्भूपश्रेयसी ।
भूपनीतिर्भूपरीतिर्भूपभीतिर्भयङ्करी ॥ १८२ ॥

भवदानन्दलहरी भवदानन्दसुन्दरी ।
भवदानन्दकरणी भवदानन्दवर्धिनी ॥ १८३ ॥

भवदानन्दरमणी भवदानन्ददायिनी ।
भवदानन्दजननी भवदानन्दरूपिणी ॥ १८४ ॥

य इदं पठते स्तोत्रं प्रत्यहं भक्तिसंयुतः ।
गुरुभक्तियुतो भूत्वा गुरुसेवापरायणः ॥ १८५ ॥

सत्यवादी जितेन्द्री च ताम्बूलपूरिताननः ।
दिवा रात्रौ च सन्ध्यायां स भवेत्परमेश्वरः ॥ १८६ ॥

स्तवमात्रस्य पाठेन राजा वश्यो भवेद्ध्रुवम् ।
सर्वागमेषु विज्ञानी सर्वतन्त्रे स्वयं हरः ॥ १८७ ॥

गुरोर्मुखात्समभ्यस्य स्थित्वा च गुरुसन्निधौ ।
शिवस्थानेषु सन्ध्यायां शून्यागारे चतुष्पथे ॥ १८८ ॥

यः पठेच्छृणुयाद्वापि स योगी नात्र संशयः ।
धनवान् गुणवान्श्रीमान् धीमानिव गुरुः प्रिये ॥ १८९ ॥

मृतपुत्रा च या नारी दौर्भाग्यपरिपीडिता ।
वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना ॥ १९० ॥

धनधान्यविहीना च रोगशोकाकुला च या ।
ताभिरेतन्महादेवि भूर्जपत्रे विलेखयेत् ॥ १९१ ॥

दद्याच्छिष्याय शान्ताय विनीताय जितात्मने ।
भक्ताय शान्तियुक्ताय जपपूजारताय च ॥ १९२ ॥

जन्मान्तरसहस्रैस्तु वर्णितुन्नैव शक्यते ।
स्तवमात्रस्य माहात्म्यं वक्त्रकोटिशतैरपि ॥ १९३ ॥

इति श्रीमहातन्त्रार्णवे भुवनेश्वरीभकारादिसहस्रनामस्तोत्रम् ॥

# श्री भुवनेश्वरी हृदयम्

यदाज्ञयेदं गगनाद्यशेषं
सृजत्यजः श्रीपतिरौरसं वा।
बिभर्ति संहन्ति भवस्तदन्ते
भजामहे त्वं श्रीभुवनेश्वरीं ताम्॥ १॥

जगज्जनानन्दकरीं जयाख्यां
यशस्विनीं यन्त्रसुयज्ञयोनिम्।
जितामितामित्रकृतप्रपञ्चां
भजामहे श्रीभुवनेश्वरीं ताम्॥ २॥

हरौ प्रसुप्ते भुवनत्रयान्ते
अवातरन्नाभिज पद्मजन्मा।
विधिस्ततोऽन्धे विदधार यत्पदं
भजामहे श्रीभुवनेश्वरीं ताम्॥ ३॥

दयास्फुरत्कोर कटाक्षलाभात्
नैकत्र यस्याः प्रलभन्ति सिद्धाः।
कवित्वमीशि त्वमपि स्वतन्त्रा
भजामहे श्रीभुवनेश्वरीं ताम्॥ ४॥

प्रसीदतु प्रेमरसार्द्रचित्ता
सदा हि सा श्रीर्भुवनेश्वरी मे।
कृपाकटाक्षेण कुबेरकल्पाः
भवन्ति यस्याः पदभक्तिभाजः॥ ५॥

# छिन्नमस्ता ध्यानम्

१. प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्त्रिकां
दिग्वस्त्रां स्वकबन्ध शोणितसुधाधारां पिबन्तीं मुदा।
नागाबद्ध शिरोमणिं त्रिनयनां हृद्युत्पलालंकृतां
रत्यासक्त मनोभवोपरि दृढां वन्दे जपासन्निभाम्॥ १॥

दक्षे चातिसिता विमुक्त चिकुरा कर्त्रीं तथा खर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नापि सा वर्णिनी।
देव्याश्छिन्न कबन्धतः पतदसृग्धारां पिबन्ती मुदा
नागाबद्ध शिरोमणिर्मनुविदा ध्येया सदा सा सुरैः॥ २॥

प्रत्यालीढपदा कबन्धविगलद्रक्तं पिबन्ती मुदा
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी।
शक्तिः सापि परात्परा भगवती नाम्ना परा डाकिनी
ध्येया ध्यानपरैः सदा सविनयं भक्तेष्टभूतिप्रदा॥ ३॥

२. भास्वन्मण्डलमध्यगां निजशिरश्छिन्नं विकीर्णालकं
स्फारास्यं प्रपिबद्गलात्स्वरुधिरं वामे करे बिभ्रतीम्।
याभासक्तरतिस्मरोपरिगतां सख्यौ निजे डाकिनी-
वर्णिन्यौ परिदृश्य मोदकलितां श्रीछिन्नमस्तां भजे॥ ४॥

३. स्वनाभौ नीरजं ध्यायाम्यर्धं विकसितं सितम्।
तत्पद्मकोशमध्ये तु मण्डलं चण्डरोचिषः॥ ५॥

जपाकुसुमसङ्काशं रक्तबन्धूकसन्निभम्।
रजस्सत्वतमोरेखा योनिमण्डलमण्डितम्॥ ६॥

तन्मध्ये तां महादेवीं सूर्य कोटि समप्रभाम्।
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्॥ ७॥

प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम् ।
पिबन्तीं रौधिरीं धारां निजकण्ठ विनिर्गताम् ॥ ८ ॥

विकीर्णकेशपाशां च नानापुष्पसमन्विताम् ।
दक्षिणे च करे कर्त्रीं मुण्डमाला विभूषिताम् ॥ ९ ॥

दिगंबरां महाघोरां प्रत्यालीढपदे स्थिताम् ।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥ १० ॥

रतिकामोपरिष्ठां च सदा ध्यातां च मन्त्रिभिः ।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ॥ ११ ॥

४. विपरीतरतासक्तौ ध्यायामि रतिमन्मथौ ।
शाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः ॥ १२ ॥

देवीगलोच्छलद्रक्त धारापानं प्रकुर्वतीम् ।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगंबराम् ॥ १३ ॥

कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ।
नागयज्ञोपवीताढ्यां ज्वलत्तेजोमयीमिव ॥ १४ ॥

प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम् ।
सदा द्वादशवर्षीयां अस्थिमालाविभूषिताम् ॥ १५ ॥

डाकिनीं वामपार्श्वे तु कल्पसूर्यानलोपमाम् ।
विद्युज्जटां त्रिनयनां दन्तपंक्ति बलाकिनीम् ॥ १६ ॥

दंष्ट्राकरालवदनां पीनोन्नतपयोधराम् ।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बराम् ॥ १७ ॥

लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम् ।
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ॥ १८ ॥

देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम् ।
करस्थितकपालेन भीषणेनातिभीषणाम् ।
आभ्यां निषेव्यमाणां तां कलये जगदीश्वरीम् ॥ १९ ॥

# छिन्नमस्ता - अष्टोत्तरशतनाम स्तोत्रम्

**श्रीपार्वत्युवाच ॥**

नाम्नां सहस्रं परमं छिन्नमस्ताप्रियं शुभम् ।
कथितं भवता शम्भो सद्यः शत्रुनिकृन्तनम् ॥ १ ॥

पुनः पृच्छाम्यहं देव कृपां कुरु ममोपरि ।
सहस्रनामपाठे च अशक्तो यः पुमान् भवेत् ॥ २ ॥

तेन किं पठ्यते नाथ तन्मे ब्रूहि कृपामय ।
**श्रीसदाशिव उवाच ॥**

अष्टोत्तरशतं नाम्नां पठ्यते तेन सर्वदा ॥ ३ ॥

सहस्रनामपाठस्य फलं प्राप्नोति निश्चितम् ॥

ॐ अस्य श्रीछिन्नमस्ताष्टोत्तरशतनामस्तोत्रस्य सदाशिवः ऋषिः, अनुष्टुप्छन्दः, श्रीछिन्नमस्ता देवता । मम सकलसिद्धिप्राप्तये जपे विनियोगः ॥

छिन्नमस्ता महाविद्या महाभीमा महोदरी ।
चण्डेश्वरी चण्डमाता चण्डमुण्डप्रभञ्जिनी ॥ ४ ॥

महाचण्डा चण्डरूपा चण्डिका चण्डखण्डिनी ।
क्रोधिनी क्रोधजननी क्रोधरूपा कुहूः कला ॥ ५ ॥

कोपातुरा कोपयुता कोपसंहारकारिणी ।
वज्रवैरोचनी वज्रा वज्रकल्पा च डाकिनी ॥ ६ ॥

डाकिनीकर्मनिरता डाकिनीकर्मपूजिता।
डाकिनीसङ्गनिरता डाकिनीप्रेमपूरिता॥ ७॥

खट्वाङ्गधारिणी खर्वा खड्गखर्परधारिणी।
प्रेताशना प्रेतयुता प्रेतसङ्गविहारिणी॥ ८॥

छिन्नमुण्डधरा छिन्नचण्डविद्या च चित्रिणी।
घोररूपा घोरदृष्टिर्घोररावा घनोदरी॥ ९॥

योगिनी योगनिरता जपयज्ञपरायणा।
योनिचक्रमयी योनिर्योनिचक्रप्रवर्त्तिनी॥ १०॥

योनिमुद्रा योनिगम्या योनियन्त्रनिवासिनी।
यन्त्ररूपा यन्त्रमयी यन्त्रेशी यन्त्रपूजिता॥ ११॥

कीर्त्या कपर्दिनी काली कङ्काली कलविकारिणी।
आरक्ता रक्तनयना रक्तपानपरायणा॥ १२॥

भवानी भूतिदा भूतिर्भूतिदात्री च भैरवी।
भैरवाचारनिरता भूतभैरवसेविता॥ १३॥

भीमा भीमेश्वरी देवी भीमनादपरायणा।
भवाराध्या भवनुता भवसागरतारिणी॥ १४॥

भद्रकाली भद्रतनुर्भद्ररूपा च भद्रिका।
भद्ररूपा महाभद्रा सुभद्रा भद्रपालिनी॥ १५॥

सुभव्या भव्यवदना सुमुखी सिद्धसेविता।
सिद्धिदा सिद्धनिवहा सिद्धा सिद्धनिषेविता॥ १६॥

शुभदा शुभगा शुद्धा शुद्धसत्त्वा शुभावहा।
श्रेष्ठा दृष्टिमयी देवी दृष्टिसंहारकारिणी॥ १७॥

शर्वाणी सर्वगा सर्वा सर्वमङ्गलकारिणी।
शिवा शान्ता शान्तिरूपा मृडानी मदनातुरा ॥ १८ ॥

इति ते कथितं देवि स्तोत्रं परमदुर्लभम्।
गुह्याद् गुह्यतरं गोप्यं गोपनीयं प्रयत्नतः ॥ १९ ॥

किमत्र बहुनोक्तेन त्वदग्रे प्राणवल्लभे।
मारणं मोहनं देवि ह्युच्चाटनमतः परम् ॥ २० ॥

स्तम्भनादिककर्माणि ऋद्धयस्सिद्धयोऽपि च।
त्रिकालपठनादस्य सर्वे सिद्ध्यन्त्यसंशयः ॥ २१ ॥

महोत्तमं स्तोत्रमिदं वरानने मयेरितं नित्यमनन्यबुद्धयः।
पठन्ति ये भक्तियुता नरोत्तमा भवेन्न तेषां रिपुभिः पराजयः ॥ २२ ॥

# श्री छिन्नमस्तासहस्रनामस्तोत्रम्

श्रीदेव्युवाच ॥

वद देव महादेव सर्वशास्त्रविदां वर।
कृपां कुरु जगन्नाथ कथयस्व मम प्रभो ॥ १ ॥

प्रचण्डचण्डिका देवी सर्वलोकहितैषिणी।
तस्याश्च कथितं सर्वं स्तवश्च कवचादिकम् ॥ २ ॥

इदानीं छिन्नमस्ताया नाम्नां साहस्रकं शुभम्।
मे प्रकाशय देवेश कृपया भक्तवत्सल ॥ ३ ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि च्छिन्नायास्सुमनोहरम्।
गोपनीयं प्रयत्नेन यदीच्छेदात्मनो हितम् ॥ ४ ॥

न वक्तव्यश्च कुत्रापि प्राणैः कण्ठगतैरपि।
तच्छृणुष्व महेशानि सर्वं तत्कथयामि ते ॥ ५ ॥

विना पूजां विना योगं विना जाप्येन सिद्ध्यति।
विना ध्यानं तथा देवि विना भूतादिशोधनम् ॥ ६ ॥

पठनादेव सिद्धिः स्यात्सत्यं सत्यं वरानने।
पुरा कैलासशिखरे सर्वदेवसभालये।
परिषप्रच्छ कथितं यथा शृणु वरानने ॥ ७ ॥

अस्य श्रीप्रचण्डचण्डिकासहस्रनामस्तोत्रस्य भैरव ऋषिः, सम्राट्छन्दः, प्रचण्डचण्डिका देवता, धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ ८ ॥

प्रचण्डचण्डिका चण्डा चण्डदेव्यविनाशिनी।
चामुण्डा च सुचण्डा च चपला चारुदेहिनी ॥ १ ॥

ललज्जिह्वा चलद्रक्ता चारुचन्द्रनिभानना।
चकोराक्षी चण्डनादा चञ्चला च मनोन्मदा ॥ २ ॥

चेतना चितिसंस्था च चित्कला ज्ञानरूपिणी।
महाभयङ्करीदेवी वरदाभयधारिणी ॥ ३ ॥

भयाढ्या भवरूपा च भवबन्धविमोचिनी।
भवानी भुवनेशी च भवसंसारतारिणी ॥ ४ ॥

भवाब्धिर्भवमोक्षा च भवबन्धविघातिनी।
भागीरथी भगस्था च भाग्यभोग्यप्रदायिनी ॥ ५ ॥

कमला कामदा दुर्गा दुर्गबन्धविमोचिनी।
दुर्दर्शना दुर्गरूपा दुर्ज्ञेया·दुर्गनाशिनी ॥ ६ ॥

दीनदुःखहरा नित्या नित्यशोकविनाशिनी।
नित्यानन्दमयी देवी नित्यकल्याणरूपिणी ॥ ७ ॥

सर्वार्थसाधनकरी सर्वसिद्धिस्वरूपिणी।
सर्वक्षोभणशक्तिश्च सर्वविद्राविणी परा॥ ८॥

सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी।
सर्वज्ञा सिद्धिदात्री च सिद्धिविद्यास्वरूपिणी॥ ९॥

सकला निष्कला सिद्धा कलातीता कलामयी।
कुलज्ञा कुलरूपा च चक्षुरानन्ददायिनी॥ १०॥

कुलीना सामरूपा च कामरूपा मनोहरा।
कमलस्था कञ्जमुखी कुञ्जरेश्वरगामिनी॥ ११॥

कुलरूपा कोटराक्षी कमलैश्वर्यदायिनी।
कुन्ती ककुद्मिनी कुल्ला कुरुकुल्ला करालिका॥ १२॥

कामेश्वरी काममाता कामतापविमोचिनी।
कामरूपा कामसत्त्वा कामकौतुककारिणी॥ १३॥

कारुण्यहृदया क्रीं क्रींमन्त्ररूपा च कोटरा।
कौमोदकी कुमुदिनी कैवल्या कुलवासिनी॥ १४॥

केशवी केशवाराध्या केशिदैत्यनिषूदिनी।
क्लेशहा क्लेशरहिता क्लेशसङ्घविनाशिनी॥ १५॥

कराली च करालास्या करालासुरनाशिनी।
करालचर्मासिधरा करालकुलनाशिनी॥ १६॥

कङ्किनी कङ्कनिरता कपालवरधारिणी।
खड्गहस्ता त्रिनेत्रा च खण्डमुण्डासिधारिणी॥ १७॥

खलहा खलहन्त्री च क्षरती खगतिः सदा।
गङ्गा गौतमपूज्या च गौरी गन्धर्ववासिनी॥ १८॥

गन्धर्वा गगणाराध्या गणा गन्धर्वसेविता ।
गणत्कारगणा देवी निर्गुणा च गुणात्मिका ॥ १९ ॥

गुणता गुणदात्री च गुणगौरवदायिनी ।
गणेशमाता गम्भीरा गगणा ज्योतिकारिणी ॥ २० ॥

गौराङ्गी च गया गम्या गौतमस्थानवासिनी ।
गदाधरप्रिया ज्ञेया ज्ञानगम्या गुहेश्वरी ॥ २१ ॥

गायत्री च गुणवती गुणातीता गुणेश्वरी ।
गणेशजननी देवी गणेशवरदायिनी ॥ २२ ॥

गणाध्यक्षनुता नित्या गणाध्यक्षप्रपूजिता ।
गिरीशरमणी देवी गिरीशपरिवन्दिता ॥ २३ ॥

गतिदा गतिहा गीता गौतमी गुरुसेविता ।
गुरुपूज्या गुरुयुता गुरुसेवनतत्परा ॥ २४ ॥

गन्धद्वारा च गन्धाढ्या गन्धात्मा गन्धकारिणी ।
गीर्वाणपतिसम्पूज्या गीर्वाणपतितुष्टिदा ॥ २५ ॥

गीर्वाणाधीशरमणी गीर्वाणाधीशवन्दिता ।
गीर्वाणाधीशसंसेव्या गीर्वाणाधीशहर्षदा ॥ २६ ॥

गानशक्तिर्गानगम्या गानशक्तिप्रदायिनी ।
गानविद्या गानसिद्धा गानसन्तुष्टमानसा ॥ २७ ॥

गानातीता गानगीता गानहर्षप्रपूरिता ।
गन्धर्वपतिसंहृष्टा गन्धर्वगुणमण्डिता ॥ २८ ॥

गन्धर्वगणसंसेव्या गन्धर्वगणमध्यगा ।
गन्धर्वगणकुशला गन्धर्वगणपूजिता ॥ २९ ॥

गन्धर्वगणनिरता गन्धर्वगणभूषिता ।
घर्घरा घोररूपा च घोरघुर्घुरनादिनी ॥ ३० ॥

घर्मविन्दुसमुद्भूता घर्मबिन्दुस्वरूपिणी ।
घण्टारवा घनरवा घनरूपा घनोदरी ॥ ३१ ॥

घोरसत्त्वा च घनदा घण्टानादविनोदिनी ।
घोरचाण्डालिनी घोरा घोरचण्डविनाशिनी ॥ ३२ ॥

घोरदानवदमनी घोरदानवनाशिनी ।
घोरकर्मादिरहिता घोरकर्मनिषेविता ॥ ३३ ॥

घोरतत्त्वमयी देवी घोरतत्वविमोचिनी ।
घोरकर्मादिरहिता घोरकर्मादिपूरिता ॥ ३४ ॥

घोरकर्मादिनिरता घोरकर्मप्रवर्धिनी ।
घोरभूतप्रमथनी घोरवेतालनाशिनी ॥ ३५ ॥

घोरदावाग्निदमनी घोरशत्रुनिषूदिनी ।
घोरमन्त्रयुता चैव घोरमन्त्रप्रपूजिता ॥ ३६ ॥

घोरमन्त्रमनोऽभिज्ञा घोरमन्त्रफलप्रदा ।
घोरमन्त्रनिधिश्चैव घोरमन्त्रकृतास्पदा ॥ ३७ ॥

घोरमन्त्रेश्वरी देवी घोरमन्त्रार्थमानसा ।
घोरमन्त्रार्थतत्वज्ञा घोरमन्त्रार्थपारगा ॥ ३८ ॥

घोरमन्त्रार्थविभवा घोरमन्त्रार्थबोधिनी ।
घोरमन्त्रार्थनिचया घोरमन्त्रार्थजन्मभूः ॥ ३९ ॥

घोरमन्त्रजपरता घोरमन्त्रजपोद्यता ।
ङकारवर्णनिलया ङकाराक्षरमण्डिता ॥ ४० ॥

ङ्कारापररूपा च ङ्काराक्षररूपिणी ।
चित्ररूपा चित्रनाडी चारुकेशी चयप्रभा ॥ ४१ ॥

चञ्चला चञ्चलाकारा चारुरूपा च चण्डिका ।
चतुर्वेदमयी चण्डा चाण्डालगणमण्डिता ॥ ४२ ॥

चाण्डालच्छेदिनी चण्डतापनिर्मूलकारिणी ।
चतुर्भुजा चण्डरूपा चण्डमुण्डविनाशिनी ॥ ४३ ॥

चन्द्रिका चन्द्रकीर्तिश्च चन्द्रकान्तिस्तथैव च ।
चन्द्रास्या चन्द्ररूपा च चन्द्रमौलिस्वरूपिणी ॥ ४४ ॥

चन्द्रमौलिप्रिया चन्द्रमौलिसन्तुष्टमानसा ।
चकोरबन्धुरमणी चकोरबन्धुपूजिता ॥ ४५ ॥

चक्ररूपा चक्रमयी चक्राकारस्वरूपिणी ।
चक्रपाणिप्रिया चक्रपाणिप्रीतिप्रदायिनी ॥ ४६ ॥

चक्रपाणिरसाभिज्ञा चक्रपाणिवरप्रदा ।
चक्रपाणिवरोन्मत्ता चक्रपाणिस्वरूपिणी ॥ ४७ ॥

चक्रपाणीश्वरी नित्यं चक्रपाणिनमस्कृता ।
चक्रपाणिसमुद्भूता चक्रपाणिगुणास्पदा ॥ ४८ ॥

चन्द्रावली चन्द्रवती चन्द्रकोटिसमप्रभा ।
चन्दनार्चितपादाब्जा चन्दनान्वितमस्तका ॥ ४९ ॥

चारुकीर्त्तिश्चारुनेत्रा चारुचन्द्रविभूषणा ।
चारुभूषा चारुवेषा चारुवेषप्रदायिनी ॥ ५० ॥

चारुभूषाभूषिताङ्गी चतुर्वक्त्रवरप्रदा ।
चतुर्वक्त्रसमाराध्या चतुर्वक्त्रसमाश्रिता ॥ ५१ ॥

चतुर्वक्त्रा चतुर्बाहा चतुर्थी च चतुर्दशी।
चित्रा चर्मण्वती चैत्री चन्द्रभागा च चम्पका ॥ ५२ ॥

चतुर्दशयमाकारा चतुर्दशयमानुगा।
चतुर्दशयमप्रीता चतुर्दशयमप्रिया ॥ ५३ ॥

छलस्था छिद्ररूपा च छद्मदा छद्मराजिका।
छिन्नमस्ता तथा छिन्ना छिन्नमुण्डविधारिणी ॥ ५४ ॥

जयदा जयरूपा च जयन्ती जयमोहिनी।
जया जीवनसंस्था च जालन्धरनिवासिनी ॥ ५५ ॥

ज्वालामुखी ज्वालदात्री जाज्वल्यदहनोपमा।
जगद्वन्द्या जगत्पूज्या जगत्त्राणपरायणा ॥ ५६ ॥

जगती जगदाधारा जन्ममृत्युजरापहा।
जननी जन्मभूमिश्च जन्मदा जयशालिनी ॥ ५७ ॥

ज्वररोगहरा ज्वाला ज्वालामालाप्रपूरिता।
जम्भारातीश्वरी जम्भारातिवैभवकारिणी ॥ ५८ ॥

जम्भारातिस्तुता जम्भारातिशत्रुनिषूदिनी।
जयदुर्गा जयाराध्या जयकाली जयेश्वरी ॥ ५९ ॥

जयतारा जयातीता जयशङ्करवल्लभा।
जलदा जह्नुतनया जलधित्रासकारिणी ॥ ६० ॥

जलधिव्याधिदमनी जलधिज्वरनाशिनी।
जङ्गमेशी जाड्यहरा जाड्यसङ्घनिवारिणी ॥ ६१ ॥

जाड्यग्रस्तजनातीता जाड्यरोगनिवारिणी।
जन्मदात्री जन्महर्त्री जयघोषसमन्विता ॥ ६२ ॥

जपयोगसमायुक्ता जपयोगविनोदिनी ।
जपयोगप्रिया जाप्या जपातीता जयस्वना ॥ ६३ ॥

जायाभावस्थिता जाया जायाभावप्रपूरिणी ।
जपाकुसुमसङ्काशा जपाकुसुमपूजिता ॥ ६४ ॥

जपाकुसुमसम्प्रीता जपाकुसुममण्डिता ।
जपाकुसुमवद्भासा जपाकुसुमरूपिणी ॥ ६५ ॥

जमदग्निस्वरूपा च जानकी जनकात्मजा ।
झञ्झावातप्रमुक्ताङ्गी झोरझङ्कारवासिनी ॥ ६६ ॥

झङ्कारकारिणी झञ्झावातरूपा च झङ्करी ।
ञकाराणुस्वरूपा च टवट्टङ्कारनादिनी ॥ ६७ ॥

टङ्कारी टकुवाणी च ठकाराक्षररूपिणी ।
डिण्डिमा च तथा डिम्भा डिण्डुडिण्डिमवादिनी ॥ ६८ ॥

ढक्कामयी ढिलमयी नृत्यशब्दविलासिनी ।
ढक्का ढक्केश्वरी ढक्काशब्दरूपा तथैव च ॥ ६९ ॥

ढक्कानादप्रिया ढक्कानादसन्तुष्टमानसा ।
णकारा णाक्षरमयी णाक्षरादिस्वरूपिणी ॥ ७० ॥

त्रिपुरा त्रिपुरमयी त्रिशक्तिस्त्रिगुणात्मिका ।
तामसी च त्रिलोकेशी त्रिपुरा च त्रयीश्वरी ॥ ७१ ॥

त्रिविद्या च त्रिरूपा च त्रिनेत्रा च त्रिरूपिणी ।
तारिणी तरला तारा तारकारिप्रपूजिता ॥ ७२ ॥

तारकारिसमाराध्या तारकारिवरप्रदा ।
तारकारिप्रसूस्तन्वी तरुणी तरलप्रभा ॥ ७३ ॥

त्रिरूपा च त्रिपुरगा त्रिशूलवरधारिणी।
त्रिशूलिनी तन्त्रमयी तन्त्रशास्त्रविशारदा ॥ ७४ ॥

तन्त्ररूपा तपोमूर्तिस्तन्त्रमन्त्रस्वरूपिणी।
तडित्तडिल्लताकारा तत्त्वज्ञानप्रदायिनी ॥ ७५ ॥

तत्त्वज्ञानेश्वरी देवी तत्त्वज्ञानप्रमोदिनी।
त्रयीमयी त्रयीसेव्या त्र्यक्षरी त्र्यक्षरेश्वरी ॥ ७६ ॥

तापविध्वंसिनी तापसङ्गनिर्मूलकारिणी।
त्रासकर्त्री त्रासहर्त्री त्रासदात्री च त्रासहा ॥ ७७ ॥

तिथीशा तिथिरूपा च तिथिस्था तिथिपूजिता।
तिलोत्तमा च तिलदा तिलप्रीता तिलेश्वरी ॥ ७८ ॥

त्रिगुणा त्रिगुणाकारा त्रिपुरी त्रिपुरात्मिका।
त्रिकूटा त्रिकुटाकारा त्रिकूटाचलमध्यगा ॥ ७९ ॥

त्रिजटा च त्रिनेत्रा च त्रिनेत्रवरसुन्दरी।
तृतीया च त्रिवर्षा च त्रिविधा त्रिमतेश्वरी ॥ ८० ॥

त्रिकोणस्था त्रिकोणेशी त्रिकोणयन्त्रमध्यगा।
त्रिसन्ध्या च त्रिसन्ध्यार्च्या त्रिपदा त्रिपदास्पदा ॥ ८१ ॥

स्थानस्थिता स्थलस्था च धन्यस्थलनिवासिनी।
थकाराक्षररूपा च स्थूलरूपा तथैव च ॥ ८२ ॥

स्थूलहस्ता तथा स्थूला स्थैर्यरूपप्रकाशिनी।
दुर्गा दुर्गार्तिहन्त्री च दुर्गबन्धविमोचिनी ॥ ८३ ॥

देवी दानवसंहन्त्री दनुजेशनिषूदिनी।
दारापत्यप्रदा नित्या शङ्करार्धाङ्गधारिणी ॥ ८४ ॥

दिव्याङ्गी देवमाता च देवदुष्टविनाशिनी ।
दीनदुःखहरा दीनतापनिर्मूलकारिणी ॥ ८५ ॥

दीनमाता दीनसेव्या दीनदम्भविनाशिनी ।
दनुजध्वंसिनी देवी देवकी देववल्लभा ॥ ८६ ॥

दानवारिप्रिया दीर्घा दानवारिप्रपूजिता ।
दीर्घस्वरा दीर्घतनुर्दीर्घदुर्गतिनाशिनी ॥ ८७ ॥

दीर्घनेत्रा दीर्घचक्षुर्दीर्घकेशी दिगम्बरी ।
दिगम्बरप्रिया दान्ता दिगम्बरस्वरूपिणी ॥ ८८ ॥

दुःखहीना दुःखहरा दुःखसागरतारिणी ।
दुःखदारिद्र्यशमनी दुःखदारिद्र्यकारिणी ॥ ८९ ॥

दुःखदा दुस्सहा दुष्टखण्डनैकस्वरूपिणी ।
देववामा देवसेव्या देवशक्तिप्रदायिनी ॥ ९० ॥

दामिनी दामिनीप्रीता दामिनीशतसुन्दरी ।
दामिनीशतसंसेव्या दामिनीदामभूषिता ॥ ९१ ॥

देवताभावसन्तुष्टा देवताशतमध्यगा ।
दयार्द्रा च दयारूपा दया दानपरायणा ॥ ९२ ॥

दयाशीला दयासारा दयासागरसंस्थिता ।
दशविद्यात्मिका देवी दशविद्यास्वरूपिणी ॥ ९३ ॥

धरणी धनदा धात्री धन्या धन्यपरा शिवा ।
धर्मरूपा धनिष्ठा च धेया च धीरगोचरा ॥ ९४ ॥

धर्मराजेश्वरी धर्मकर्मरूपा धनेश्वरी ।
धनुर्विद्या धनुर्गम्या धनुर्धरवरप्रदा ॥ ९५ ॥

धर्मशीला धर्मलीला धर्मकर्मविवर्जिता।
धर्मदा धर्मनिरता धर्मपाखण्डखण्डिनी॥ ९६॥

धर्मेशी धर्मरूपा च धर्मराजवरप्रदा।
धर्मिणी धर्मगेहस्था धर्माधर्मस्वरूपिणी॥ ९७॥

धनदा धनदप्रीता धनधान्यसमृद्धिदा।
धनधान्यसमृद्धिस्था धनधान्यविनाशिनी॥ ९८॥

धर्मनिष्ठा धर्मधीरा धर्ममार्गरता सदा।
धर्मबीजकृतस्थाना धर्मबीजसुरक्षिणी॥ ९९॥

धर्मबीजेश्वरी धर्मबीजरूपा च धर्मगा।
धर्मबीजसमुद्भूता धर्मबीजसमाश्रिता॥ १००॥

धराधरपतिप्राणा धराधरपतिस्तुता।
धराधरेन्द्रतनुजा धराधरेन्द्रवन्दिता॥ १०१॥

धराधरेन्द्रगेहस्था धराधरेन्द्रपालिनी।
धराधरेन्द्रसर्वार्तिनाशिनी धर्मपालिनी॥ १०२॥

नवीना निर्मला नित्या नगराजप्रपूजिता।
नागेश्वरी नागमाता नागकन्या च नग्निका॥ १०३॥

निर्लेपा निर्विकल्पा च निर्लोमा निरुपद्रवा।
निराहारा निराकारा निरञ्जनस्वरूपिणी॥ १०४॥

नागिनी नागविभवा नागराजपरिस्तुता।
नागराजगुणज्ञा च नागराजसुखप्रदा॥ १०५॥

नागलोकगता नित्यं नागलोकनिवासिनी।
नागलोकेश्वरी नागभगिनी नागपूजिता॥ १०६॥

नागमध्यस्थिता नागमोहसङ्क्षोभदायिनी ।
नृत्यप्रिया नृत्यवती नृत्यगीतपरायणा ॥ १०७ ॥

नृत्येश्वरी नर्तकी च नृत्यरूपा निराश्रया ।
नारायणी नरेन्द्रस्था नरमुण्डास्थिमालिनी ॥ १०८ ॥

नरमांसप्रिया नित्यं नररक्तप्रिया सदा ।
नरराजेश्वरी नारीरूपा नारीस्वरूपिणी ॥ १०९ ॥

नारीगणार्चिता नारीमध्यगा नूतनाम्बरा ।
नर्मदा च नदीरूपा नदीसङ्गमसंस्थिता ॥ ११० ॥

नर्मदेश्वरसंप्रीता नर्मदेश्वररूपिणी ।
पद्मावती पद्ममुखी पद्मकिञ्जल्कवासिनी ॥ १११ ॥

पट्टवस्त्रपराधीना पद्मरागविभूषिता ।
परमा प्रीतिदा नित्यं प्रेतासननिवासिनी ॥ ११२ ॥

परिपूर्णरसोन्मत्ता प्रेमविह्वलवल्लभा ।
पवित्रासवनिष्पूता प्रेयसी परमात्मिका ॥ ११३ ॥

प्रियव्रतपरा नित्यं परमप्रेमदायिनी ।
पुष्पप्रिया पद्मकोशा पद्मधर्मनिवासिनी ॥ ११४ ॥

फेत्कारिणीतन्त्ररूपा फेरुफेरवनादिनी ।
वंशिनी वेशरूपा च बगला वामरूपिणी ॥ ११५ ॥

वाङ्मयी वसुधा वृष्या वाग्भवाख्या वरानरा ।
बुद्धिदा बुद्धिरूपा च विद्या वादस्वरूपिणी ॥ ११६ ॥

बाला वृद्धमयीरूपा वाणी वाक्यनिवासिनी ।
वरुणा वाग्वती वीरा वीरभूषणभूषिता ॥ ११७ ॥

वीरभद्रार्चितपदा वीरभद्रप्रसूरपि ।
वेदमार्गरता वेदमन्त्ररूपा वषट्प्रिया ॥ ११८ ॥

वीणावाद्यसमायुक्ता वीणावाद्यपरायणा ।
वीणारवा तथा वीणाशब्दरूपा च वैष्णवी ॥ ११९ ॥

वैष्णवाचारनिरता वैष्णवाचारतत्परा ।
विष्णुसेव्या विष्णुपत्नी विष्णुरूपा वरानना ॥ १२० ॥

विश्वेश्वरी विश्वमाता विश्वनिर्माणकारिणी ।
विश्वरूपा च विश्वेशी विश्वसंहारकारिणी ॥ १२१ ॥

भैरवी भैरवाराध्या भूतभैरवसेविता ।
भैरवेशी तथा भीमा भैरवेश्वरतुष्टिदा ॥ १२२ ॥

भैरवाधीशरमणी भैरवाधीशपालिनी ।
भीमेश्वरी भीममाता भीमशब्दपरायणा ॥ १२३ ॥

भीमरूपा च भीमेशी भीमा भीमवरप्रदा ।
भीमपूजितपादाब्जा भीमभैरवपालिनी ॥ १२४ ॥

भीमासुरध्वंसकरी भीमदुष्टविनाशिनी ।
भुवना भुवनाराध्या भवानी भूतिदा सदा ॥ १२५ ॥

भयदा भयहन्त्री च अभया भयरूपिणी ।
भीमनादाविह्वला च भयभीतिविनाशिनी ॥ १२६ ॥

मत्ता प्रमत्तरूपा च मदोन्मत्तस्वरूपिणी ।
मान्या मनोज्ञा माना च मङ्गला च मनोहरा ॥ १२७ ॥

माननीया महापूज्या महिषीदुष्टमर्दिनी ।
महिषासुरहन्त्री च मातङ्गी मयवासिनी ॥ १२८ ॥

माध्वी मधुमयी मुद्रा मुद्रिकामन्त्ररूपिणी ।
महाविश्वेश्वरीदूती मौलिचन्द्रप्रकाशिनी ॥ १२९ ॥

यशःस्वरूपिणी देवी योगमार्गप्रदायिनी ।
योगिनी योगगम्या च याम्येशी योगरूपिणी ॥ १३० ॥

यज्ञाङ्गी च योगमयी जपरूपा जपात्मिका ।
युगाख्या च युगान्ता च योनिमण्डलवासिनी ॥ १३१ ॥

अयोनिजा योगनिद्रा योगानन्दप्रदायिनी ।
रमा रतिप्रिया नित्यं रतिरागविवर्धिनी ॥ १३२ ॥

रमणी राससम्भूता रम्या रासप्रिया रसा ।
रणोत्कण्ठा रणस्था च वरारङ्गप्रदायिनी ॥ १३३ ॥

रेवती रणजैत्री च रसोद्भूता रणोत्सवा ।
लता लावण्यरूपा च लवणाब्धिस्वरूपिणी ॥ १३४ ॥

लवङ्गकुसुमाराध्या लोलजिह्वा च लेलिहा ।
वशिनी वनसंस्था च वनपुष्पप्रिया वरा ॥ १३५ ॥

प्राणेश्वरी बुद्धिरूपा बुद्धिदात्री बुधात्मिका ।
शमनी श्वेतवर्णा च शाङ्करी शिवभाषिणी ॥ १३६ ॥

शाम्यरूपा शक्तिरूपा शक्तिबिन्दुनिवासिनी ।
सर्वेश्वरी सर्वदात्री सर्वमाता च शर्वरी ॥ १३७ ॥

शाम्भवी सिद्धिदा सिद्धा सुषुम्ना स्वरभासिनी ।
सहस्रदलमध्यस्था सहस्रदलवर्त्तिनी ॥ १३८ ॥

हरप्रिया हरध्येया हुंकारबीजरूपिणी ।
लङ्केश्वरी च तरला लोममांसप्रपूजिता ॥ १३९ ॥

क्षेम्या क्षेमकरी क्षामा क्षीरबिन्दुस्वरूपिणी।
क्षिप्तचित्तप्रदा नित्यं क्षौमवस्त्रविलासिनी ॥ १४० ॥

छिन्ना च छिन्नरूपा च क्षुधा क्षौत्काररूपिणी।
सर्ववर्णमयी देवी सर्वसम्पत्प्रदायिनी ॥ १४१ ॥

सर्वसम्पत्प्रदात्री च सम्पदापदभूषिता।
सत्त्वरूपा च सर्वार्था सर्वदेवप्रपूजिता ॥ १४२ ॥

सर्वेश्वरी सर्वमाता सर्वज्ञा सुरसात्मिका।
सिन्धुर्मन्दाकिनी गङ्गा नदीसागररूपिणी ॥ १४३ ॥

सुकेशी मुक्तकेशी च डाकिनी वरवर्णिनी।
ज्ञानदा ज्ञानगगना सोममण्डलवासिनी ॥ १४४ ॥

आकाशनिलया नित्यं परमाकाशरूपिणी।
अन्नपूर्णा महानित्या महादेवरसोद्भवा ॥ १४५ ॥

मङ्गला कालिका चण्डा चण्डनादातिभीषणा।
चण्डासुरस्य मथनी चामुण्डा चपलात्मिका ॥ १४६ ॥

चण्डी चामरकेशी च चलत्कुण्डलधारिणी।
मुण्डमालाधरा नित्यं खण्डमुण्डविलासिनी ॥ १४७ ॥

खड्गहस्ता मुण्डहस्ता वरहस्ता वरप्रदा।
असिचर्मधरा नित्यं पाशाङ्कुशधरा परा ॥ १४८ ॥

शूलहस्ता शिवहस्ता घण्टानादविलासिनी।
धनुर्बाणधराऽऽदित्या नागहस्ता नगात्मजा ॥ १४९ ॥

महिषासुरहन्त्री च रक्तबीजविनाशिनी।
रक्तरूपा रक्तगात्रा रक्तहस्ता भयप्रदा ॥ १५० ॥

असिता च धर्मधरा पाशाङ्कुशधरा परा।
धनुर्बाणधरा नित्यं धूम्रलोचननाशिनी ॥ १५१ ॥

परस्था देवतामूर्त्तिः शर्वाणी शारदा परा।
नानावर्णविभूषाङ्गी नानारागसमापिनी ॥ १५२ ॥

पशुवस्त्रपरीधाना पुष्पायुधधरा परा।
मुक्तारञ्जितमालाढ्या मुक्ताहारविलासिनी ॥ १५३ ॥

स्वर्णकुण्डलभूषा च स्वर्णसिंहासनस्थिता।
सुन्दराङ्गी सुवर्णाभा शाम्भवी शकटात्मिका ॥ १५४ ॥

सर्वलोकेशविद्या च मोहसम्मोहकारिणी।
श्रेयसी सृष्टिरूपा च छिन्नच्छद्ममयी छला ॥ १५५ ॥

छिन्नमुण्डधरा नित्यं नित्यानन्दविधायिनी।
नन्दा पूर्णा च रिक्ता च तिथयः पूर्णषोडशी ॥ १५६ ॥

कुहूः संक्रांतिरूपा च पञ्चपर्वविलासिनी।
पञ्चबाणधरा नित्यं पञ्चमप्रीतिदा परा ॥ १५७ ॥

पञ्चपत्राभिलाषा च पञ्चामृतविलासिनी।
पाञ्चाली पञ्चमी देवी पञ्चरक्तप्रसारिणी ॥ १५८ ॥

पञ्चबाणधरा नित्यं नित्यदात्री दयापरा।
पललादिप्रिया नित्याऽपशुगम्या परेशिता ॥ १५९ ॥

परा पररहस्या च परमप्रेमविह्वला।
कुलीना केशिमार्गस्था कुलमार्गप्रकाशिनी ॥ १६० ॥

कुलाकुलस्वरूपा च कुलार्णवमयी कुला।
रुक्मा च कालरूपा च कालकम्पनकारिणी ॥ १६१ ॥

विलासरूपिणी भद्रा कुलाकुलनमस्कृता।
कुबेरवित्तधात्री च कुमारजननी परा॥ १६२॥

कुमारीरूपसंस्था च कुमारीपूजनाम्बिका।
कुरङ्गनयना देवी दिनेशास्यापराजिता॥ १६३॥

कुण्डली कदलीसेना कुमार्गरहिता वरा।
अनन्तरूपाऽनन्तस्था आनन्दसिन्धुवासिनी॥ १६४॥

इलास्वरूपिणी देवी ईईभेदभयङ्करी।
इड़ला पिंगला नाडी इकाराक्षररूपिणी॥ १६५॥

उमा उत्पत्तिरूपा च उच्चभावविनाशिनी।
ऋग्वेदा च निराराध्या यजुर्वेदप्रपूजिता॥ १६६॥

सामवेदेन सङ्गीता अथर्ववेदभाषिणी।
ऋकाररूपिणी ऋक्षा निरक्षरस्वरूपिणी॥ १६७॥

अहिदुर्गासमाचारा इकारार्णस्वरूपिणी।
ओंकारा प्रणवस्था च ओंकारादिस्वरूपिणी॥ १६८॥

अनुलोमविलोमस्था थकारवर्णसम्भवा।
पञ्चाशद्वर्णबीजाढ्या पञ्चाशन्मुण्डमालिका॥ १६९॥

प्रत्येकादशसङ्ख्या च षोडशी छिन्नमस्तका।
षडङ्गयुवतीपूज्या षडङ्गरूपवर्जिता॥ १७०॥

षड्वक्त्रसंश्रिता नित्या विश्वेशी षड्गदालया।
मालामन्त्रमयी मन्त्रजपमाता मदालसा॥ १७१॥

सर्वविश्वेश्वरी शक्तिः सर्वानन्दप्रदायिनी।
इति श्रीछिन्नमस्तायाः सहस्रनाममुत्तमम्॥ १७२॥

पूजाक्रमेण कथितं साधकानां सुखावहम् ।
गोपनीयं गोपनीयं गोपनीयं न संशयः ॥ १७३ ॥

अर्धरात्रे मुक्तकेशो भक्तियुक्तो भवेन्नरः ।
जपित्वा पूजयित्वा च पठेन्नामसहस्रकम् ॥ १७४ ॥

विद्यासिद्धिर्भवेत्तस्य षण्मासाभ्यासयोगतः ।
येन केन प्रकारेण देवीभक्तिपरो भवेत् ॥ १७५ ॥

कुलवारे कुलाष्टम्यां कुहूसङ्क्रांतिपूर्णिमा ।
भक्त्या स्तुत्वा महादेवीं सर्वपापात्प्रमुच्यते ॥ १७६ ॥

इति सकलविभूतेर्हेतुभूतं प्रशस्तं
पठति य इह मर्त्यश्छिन्नमस्तास्तवञ्च ॥
धनद इव धनाढ्यो माननीयो नृपाणां
स भवति च जनानामाश्रयः सिद्धिवेत्ता ॥ १७७ ॥

इति श्रीविश्वसारतन्त्रे शिवपार्वतीसंवादे श्रीछिन्नमस्तासहस्रनामस्तोत्रम् ॥

## श्री त्रिपुरभैरवी ध्यानम्

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां
रक्तालिप्तपयोधरां जपपटीं विद्यामभीतिं वरम्।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमकुटां वन्दे समन्दस्मिताम्॥

## त्रिपुरभैरवी-अष्टोत्तरशतनामस्तोत्रम्

श्रीदेव्युवाच॥

कैलासवासिन्भगवन् प्राणेश्वर कृपानिधे।
भक्तवत्सल भैरव्या नाम्नामष्टोत्तरं शतम्॥ १॥

न श्रुतं देवदेवेश वद मां दीनवत्सल॥

श्रीशिव उवाच॥

शृणु प्रिये महागोप्यं नाम्नामष्टोत्तरं शतम्॥ २॥

भैरव्याः शुभदं सेव्यं सर्वसम्पत्प्रदायकम्॥
यस्यानुष्ठानमात्रेण किन्न सिद्ध्यति भूतले॥ ३॥

ॐ भैरवी भैरवाराध्या भूतिदा भूतभावना।
आर्या ब्राह्मी कामधेनुः सर्वसम्पत्प्रदायिनी॥ ४॥

त्रैलोक्यवन्दिता देवी महिषासुरमर्दिनी।
मोहघ्नी मालती माला महापातकनाशिनी॥ ५॥

क्रोधिनी क्रोधनिलया क्रोधरक्तेक्षणा कुहूः।
त्रिपुरा त्रिपुराधारा त्रिनेत्रा भीमभैरवी॥ ६॥

देवकी देवमाता च देवदुष्टविनाशिनी।
दामोदरप्रिया दीर्घा दुर्गा दुर्गतिनाशिनी॥ ७॥

लम्बोदरी लम्बकर्णा प्रलम्बितपयोधरा ।
प्रत्यङ्गिरा प्रतिपदा प्रणतक्लेशनाशिनी ॥ ८ ॥

प्रभावती गुणवती गणमाता गुहेश्वरी ।
क्षीराब्धितनया क्षेम्या जगत्त्राणविधायिनी ॥ ९ ॥

महामारी महामोहा महाक्रोधा महानदी ।
महापातकसंहन्त्री महामोहप्रदायिनी ॥ १० ॥

विकराला महाकाला कालरूपा कलावती ।
कपालखट्वाङ्गधरा खड्गखर्परधारिणी ॥ ११ ॥

कुमारी कुङ्कुमप्रीता कुङ्कुमारुणरञ्जिता ।
कौमोदकी कुमुदिनी कीर्त्त्या कीर्त्तिप्रदायिनी ॥ १२ ॥

नवीना नीरदा नित्या नन्दिकेश्वरपालिनी ।
घर्घरा घर्घरारावा घोरा घोरस्वरूपिणी ॥ १३ ॥

कलिघ्नी कलिधर्मघ्नी कलिकौतुकनाशिनी ।
किशोरी केशवप्रीता क्लेशसङ्घनिवारिणी ॥ १४ ॥

महोन्मत्ता महामत्ता महाविद्या महीमयी ।
महायज्ञा महावाणी महामन्दरधारिणी ॥ १५ ॥

मोक्षदा मोहदा मोहा भुक्तिमुक्तिप्रदायिनी ।
अट्टाट्टहासनिरता क्वणन्नूपुरधारिणी ॥ १६ ॥

दीर्घदंष्ट्रा दीर्घमुखी दीर्घघोणा च दीर्घिका ।
दनुजान्तकरी दुष्टा दुःखदारिद्र्यभञ्जिनी ॥ १७ ॥

दुराचारा च दोषघ्नी दमपत्नी दयापरा ।
मनोभवा मनुमयी मनुवंशप्रवर्धिनी ॥ १८ ॥

श्यामा श्यामतनुः शोभा सौम्या शम्भुविलासिनी ।
इति ते कथितं दिव्यं नाम्नामष्टोत्तरं शतम् ॥ १९ ॥

भैरव्या देवदेवेश्यास्तव प्रीत्यै सुरेश्वरि ।
अप्रकाश्यमिदं गोप्यं पठनीयं प्रयत्नतः ॥ २० ॥

पूजयेत्सततंभक्त्या पठेत्स्तोत्रमिदं शुभम् ।
षण्मासाभ्यन्तरे सोऽपि गणनाथसमो भवेत् ॥ २१ ॥

## श्री त्रिपुरभैरवीसहस्रनामस्तोत्रम्

महाकालभैरव उवाच ॥

अथ वक्ष्ये महेशानि देव्या नामसहस्रकम् ।
तत्प्रसादान्महादेवि चतुर्वर्गफलं लभेत् ॥ १ ॥

सर्वरोगप्रशमनं सर्वमृत्युविनाशनम् ।
सर्वसिद्धिकरं स्तोत्रं नातः परतरः स्तवः ॥ २ ॥

नातः परतरा विद्या तीर्थं नातः परं स्मृतम् ।
यस्यां सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति ॥ ३ ॥

लयमेष्यति तत्सर्वं लयकाले महेश्वरि ।
नमामि त्रिपुरां देवीं भैरवीं भयमोचिनीम् ।
सर्वसिद्धिकरीं साक्षान्महापातकनाशिनीम् ॥ ४ ॥

अस्य श्रीत्रिपुरभैरवीसहस्रनामस्तोत्रस्य भगवानृषिः, पङ्क्तिश्छन्दः, आद्या शक्तिः, भगवती त्रिपुरभैरवी देवता, सर्वकामार्थसिद्ध्यर्थे जपे विनियोगः।

त्रिपुरा परमेशानी योगसिद्धिनिवासिनी ।
सर्वमन्त्रमयी देवी सर्वसिद्धिप्रवर्तिनी ॥ १ ॥

सर्वाधारमयी देवी सर्वसम्पत्प्रदा शुभा।
योगिनी योगमाता च योगसिद्धिप्रवर्तिनी ॥ २ ॥

योगिध्येया योगमयी योगा योगनिवासिनी।
हेला लीला तथा क्रीडा कालरूपा प्रवर्तिनी ॥ ३ ॥

कालमाता कालरात्रिः काली कमलवासिनी।
कमला कान्तिरूपा च कामराजेश्वरी क्रिया ॥ ४ ॥

कटुः कपटकेशा च कपटा कुलटाकृतिः।
कुमुदा चर्चिका कान्तिः कालरात्रिः प्रिया सदा ॥ ५ ॥

घोराकारा घोरतरा धर्माधर्मप्रदा मतिः।
घण्टाघर्घरदा घण्टा घण्टानादप्रिया सदा ॥ ६ ॥

सूक्ष्मा सूक्ष्मतरा स्थूला अतिस्थूला सदा मतिः।
अतिसत्या सत्यवती सत्या सङ्केतवासिनी ॥ ७ ॥

क्षमा भीमा तथाऽभीमा भीमनादप्रवर्तिनी।
भ्रमरूपा भयहरा भयदा भयनाशिनी ॥ ८ ॥

श्मशानवासिनी देवी श्मशानालयवासिनी।
शवासना शवाहारा शवदेहा शिवाऽशिवा ॥ ९ ॥

कण्ठदेशशवाहारा शवकङ्कणधारिणी।
दन्तुरा सुदती सत्या सत्यसङ्केतवासिनी ॥ १० ॥

सत्यदेहा सत्यहारा सत्यवादिनिवासिनी।
सत्यालया सत्यसङ्गा सत्यसङ्गरकारिणी ॥ ११ ॥

असङ्गा सङ्गरहिता सुसङ्गा सङ्गमोहिनी।
माया मतिर्महामाया महामखविलासिनी ॥ १२ ॥

गलद्रुधिरधारा च मुखद्वयनिवासिनी।
सत्यायासा सत्यसङ्गा सत्यसङ्गतिकारिणी॥ १३॥

असङ्गा सङ्गनिरता सुसङ्गा सङ्गवासिनी।
सदासत्या महासत्या मांसपाशा सुमांसका॥ १४॥

मांसाहारा मांसधरा मांसाशी मांसभक्षका।
रक्तपाना रक्तरुचिरारक्ता रक्तवल्लभा॥ १५॥

रक्ताहारा रक्तप्रिया रक्तनिन्दकनाशिनी।
रक्तपानप्रिया बाला रक्तदेशा सुरक्तिका॥ १६॥

स्वयम्भूकुसुमस्था च स्वयम्भूकुसुमोत्सुका।
स्वयम्भूकुसुमाहारा स्वयम्भूनिन्दकासना॥ १७॥

स्वयम्भूपुष्पकप्रीता स्वयम्भूपुष्पसम्भवा।
स्वयम्भूपुष्पहाराढ्या स्वयम्भूनिन्दकान्तका॥ १८॥

कुण्डगोलविलासा च कुण्डगोलसदामतिः।
कुण्डगोलप्रियकरी कुण्डगोलसमुद्भवा॥ १९॥

शुक्रात्मिका शुक्रकरा सुशुक्रा च सुशुक्तिका।
शुक्रपूजकपूज्या च शुक्रनिन्दकनिन्दका॥ २०॥

रक्तमाल्या रक्तपुष्पा रक्तपुष्पकपुष्पका।
रक्तचन्दनसिक्ताङ्गी रक्तचन्दननिन्दका॥ २१॥

मत्स्या मत्स्यप्रिया मान्या मत्स्यभक्षा महोदया।
मत्स्याहारा मत्स्यकामा मत्स्यनिन्दकनाशिनी॥ २२॥

केकराक्षी तथा क्रूरा क्रूरसैन्यविनाशिनी।
क्रूराङ्गी कुलिशाङ्गी च चक्राङ्गी चक्रसम्भवा॥ २३॥

चक्रदेहा चक्रहारा चक्रकङ्कालवासिनी।
निम्ननाभिर्भीतिहरा भयदा भयहारिका ॥ २४ ॥

भयप्रदा भया भीता अभीमा भीमनादिनी।
सुन्दरी शोभनी सत्या क्षेम्या क्षेमकरी तथा ॥ २५ ॥

सिन्दूराऽञ्चितसिन्दूरा सिन्दूरसदृशाकृतिः ।
रक्ता रञ्जितनासा च सुनासा निम्ननासिका ॥ २६ ॥

खर्वा लम्बोदरी दीर्घा दीर्घघोणा महाकुचा।
कुटिला चञ्चला चण्डी चण्डनादा प्रचण्डिका ॥ २७ ॥

अतिचण्डा महाचण्डा श्रीचण्डा चण्डवेगिनी।
चाण्डाली चण्डिका चण्डशब्दरूपा च चञ्चला ॥ २८ ॥

चम्पा चम्पावती चोस्ता तीक्ष्णा तीक्ष्णप्रिया क्षतिः ।
जलदा जयदा योगा जगदानन्दकारिणी ॥ २९ ॥

जगद्वन्द्या जगन्माता जगती जगतःक्षमा।
जन्या जलजनेत्री च जयिनी जयदा तथा ॥ ३० ॥

जननी च जगद्धात्री जयाख्या जयरूपिणी।
जगन्माता जगन्मान्या जयश्रीर्जयकारिणी ॥ ३१ ॥

जयिनी जयमाता च जया च विजया तथा।
खड्गिनी खड्गरूपा च सुखड्गा खड्गधारिणी ॥ ३२ ॥

खड्गरूपा खड्गकरा खड्गिनी खड्गवल्लभा।
खड्गदा खड्गभावा च खड्गदेहसमुद्भवा ॥ ३३ ॥

खड्गा खड्गधरा खेला खड्गिनी खड्गमण्डिनी।
शङ्खिनी चापिनी देवी वज्रिणी शूलिनी मतिः ॥ ३४ ॥

वालिनी भिन्दिपाली च पाशी च अङ्कुशी शरी।
धनुषी चटकी चर्मा दन्ती च कर्णनालिकी ॥ ३५ ॥

मुसली हलरूपा च तूणीरगणवासिनी।
तूणालया तूणहरा तूणसम्भवरूपिणी ॥ ३६ ॥

सुतूणी तूणखेदा च तूणाङ्गी तूणवल्लभा।
नानास्त्रधारिणी देवी नानाशस्त्रसमुद्भवा ॥ ३७ ॥

लाक्षा लक्षहरा लाभा सुलाभा लाभनाशिनी।
लाभहारा लाभकरा लाभिनी लाभरूपिणी ॥ ३८ ॥

धरित्री धनदा धान्या धान्यरूपा धरा धनुः ।
धुरशब्दा धुरा मान्या धराङ्गी धननाशिनी ॥ ३९ ॥

धनहा धनलाभा च धनलभ्या महाधनुः ॥
अशान्ता शान्तिरूपा च श्वासमार्गनिवासिनी ॥ ४० ॥

गगणा गणसेव्या च गणाङ्गा वागवल्लभा।
गणदा गणहा गम्या गमनाऽऽगमसुन्दरी ॥ ४१ ॥

गम्यदा गणनाशी च गदहा गदवर्धिनी।
स्थैर्या च स्थैर्यनाशा च स्थैर्यान्तकरणी कुला ॥ ४२ ॥

दात्री कर्त्री प्रिया प्रेमा प्रियदा प्रियवर्धिनी।
प्रियहा प्रियभव्या च प्रिया प्रेमाङ्घ्रिपा तनुः ॥ ४३ ॥

प्रियजा प्रियभव्या च प्रियस्था भवनस्थिता।
सुस्थिरा स्थिररूपा च स्थिरदा स्थैर्यबर्हिणी ॥ ४४ ॥

चञ्चला चपला चोला चपलाङ्गनिवासिनी।
गौरी काली तथा छिन्ना माया मान्या हरप्रिया ॥ ४५ ॥

सुन्दरी त्रिपुरा भव्या त्रिपुरेश्वरवासिनी ।
त्रिपुरनाशिनी देवी त्रिपुरप्राणहारिणी ॥ ४६ ॥

भैरवी भैरवस्था च भैरवस्य प्रिया तनुः ।
भवाङ्गी भैरवाकारा भैरवप्रियवल्लभा ॥ ४७ ॥

कालदा कालरात्रिश्च कामा कात्यायनी क्रिया ।
क्रियदा क्रियहा क्लैब्या प्रियप्राणक्रिया तथा ॥ ४८ ॥

क्रीङ्कारी कमला लक्ष्मीः शक्तिः स्वाहा विभुः प्रभुः ।
प्रकृतिः पुरुषश्चैव पुरुषा पुरुषाकृतिः ॥ ४९ ॥

परमः पुरुषश्चैव माया नारायणी मतिः ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ ५० ॥

वाराही चैव चामुण्डा इन्द्राणी हरवल्लभा ।
भार्गी माहेश्वरी कृष्णा कात्यायन्यपि पूतना ॥ ५१ ॥

राक्षसी डाकिनी चित्रा विचित्रा विभ्रमा तथा ।
हाकिनी राकिणी भीता गन्धर्वा गन्धवाहिनी ॥ ५२ ॥

केकरी कोटराक्षी च निर्मांसोलूकमांसिका ।
ललज्जिह्वा सुजिह्वा च बालदा बालदायिनी ॥ ५३ ॥

चन्द्रा चन्द्रप्रभा चान्द्री चन्द्रकांतिषु तत्परा ।
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ॥ ५४ ॥

शशिनी चन्द्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता कल्पलतिका कल्पदानदा ॥ ५५ ॥

सुकल्पा कल्पहस्ता च कल्पवृक्षकरी हनुः ।
कल्पाख्या कल्पभव्या च कल्पा नन्दकवन्दिता ॥ ५६ ॥

सूचीमुखी प्रेतमुखी उल्कामुखी महामुखी ।
उग्रमुखी च सुमुखी काकास्या विकटानना ॥ ५७ ॥

कृकलास्या च सन्ध्यास्या मुकुलीशा रमाकृतिः ।
नानामुखी च नानास्या नानारूपप्रधारिणी ॥ ५८ ॥

विश्वार्च्या विश्वमाता च विश्वाख्या विश्वभाविनी ।
सूर्या सूर्यप्रभा शोभा सूर्यमण्डलसंस्थिता ॥ ५९ ॥

सूर्यकांतिः सूर्यकरा सूर्याख्या सूर्यभावना ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥ ६० ॥

सुरदा भोगदा विश्वा बोधिनी धारिणी क्षमा ।
युगदा योगहा योग्या योग्यहा योगवर्धिनी ॥ ६१ ॥

वह्निमण्डलसंस्था च वह्निमण्डलमध्यगा ।
वह्निमण्डलरूपा च वह्निमण्डलसञ्ज्ञका ॥ ६२ ॥

वह्नितेजा वह्निरागा वह्निदा वह्निनाशिनी ।
वह्निक्रिया वह्निभुजा कला वह्नौ स्थिता सदा ॥ ६३ ॥

धूम्रार्चिषा उज्ज्वलिनी तथा च विस्फुलिङ्गिनी ।
शूलिनी च सुरूपा च कपिला हव्यवाहिनी ॥ ६४ ॥

नानातेजस्विनी देवी परब्रह्मकुटुम्बिनी ।
ज्योतिर्ब्रह्ममयी देवी परब्रह्मस्वरूपिणी ॥ ६५ ॥

परमात्मा परा पुण्या पुण्यदा पुण्यवर्धिनी ।
पुण्यदा पुण्यनाम्नी च पुण्यगन्धा प्रिया तनुः ॥ ६६ ॥

पुण्यदेहा पुण्यकरा पुण्यनिन्दकनिन्दका ।
पुण्यकालकरा पुण्या सुपुण्या पुण्यमालिका ॥ ६७ ॥

पुण्यखेला पुण्यकेली पुण्यनामसुमा पुरा।
पुण्यसेव्या पुण्यखेल्या पुराणा पुण्यवल्लभा ॥ ६८ ॥

पुरुषा पुरुषप्राणा पुरुषात्मस्वरूपिणी।
पुरुषाङ्गी च पुरुषी पुरुषस्य कला सदा ॥ ६९ ॥

सुपुष्पा पुष्पकप्राणा पुष्पहा पुष्पवल्लभा।
पुष्पप्रिया पुष्पहारा पुष्पवन्दकवन्दका ॥ ७० ॥

पुष्पहा पुष्पमाला च पुष्पनिन्दकनाशिनी।
नक्षत्रप्राणहन्त्री च नक्षत्रा लक्ष्यवन्दका ॥ ७१ ॥

लक्ष्यमाल्या लक्षहारा लक्ष्या लक्ष्यस्वरूपिणी।
नक्षत्राणी सुनक्षत्रः नक्षत्राहा महोदया ॥ ७२ ॥

महामाल्या महामान्या महती मातृपूजिता।
महामहाकनीया च महाकालेश्वरी महा ॥ ७३ ॥

महास्या वन्दनीया च महाशब्दनिवासिनी।
महाशङ्खेश्वरी मीना मत्स्यगन्धा महोदरी ॥ ७४ ॥

लम्बोदरी च लम्बोष्ठी लम्बनिम्नतनूदरी।
लम्बोष्ठी लम्बनासा च लम्बघोणा ललत्शुका ॥ ७५ ॥

अतिलम्बा महालम्बा सुलम्बा लम्बवाहिनी।
लम्बार्हा लम्बशक्तिश्च लम्बस्था लम्बपूर्विका ॥ ७६ ॥

चतुर्घण्टा महाघण्टा घण्टानादप्रिया सदा।
वाद्यप्रिया वाद्यरता सुवाद्या वाद्यनाशिनी ॥ ७७ ॥

रमा रामा सुबाला च रमणीयस्वभाविनी।
सुरम्या रम्यदा रम्भा रम्भोरू रामवल्लभा ॥ ७८ ॥

कामप्रिया कामकरा कामाङ्गी रमणी रतिः ।
रतिप्रिया रतिरती रतिसेव्या रतिप्रिया ॥ ७९ ॥

सुरभिः सुरभीः शोभा दिक्शोभाऽशुभनाशिनी ।
सुशोभा च महाशोभाऽतिशोभा प्रेततापिनी ॥ ८० ॥

लोभिनी च महालोभा सुलोभा लोभवर्धिनी ।
लोभाङ्गी लोभवन्द्या च लोभाही लोभभासका ॥ ८१ ॥

लोभप्रिया महालोभा लोभनिन्दकनिन्दका ।
लोभाङ्गवासिनी गन्धा विगन्धा गन्धनाशिनी ॥ ८२ ॥

गन्धाङ्गी गन्धपुष्टा च सुगन्धा प्रेमगन्धिका ।
दुर्गन्धा पूतिगन्धा च विगन्धा अतिगन्धिका ॥ ८३ ॥

पद्मान्तिका पद्मवहा पद्मप्रियप्रियङ्करी ।
पद्मनिन्दकनिन्दा च पद्मसन्तोषवाहना ॥ ८४ ॥

रक्तोत्पलवरा देवी रक्तोत्पलप्रिया सदा ।
रक्तोत्पलसुगन्धा च रक्तोत्पलनिवासिनी ॥ ८५ ॥

रक्तोत्पलमहामाला रक्तोत्पलमनोहरा ।
रक्तोत्पलसुनेत्रा च रक्तोत्पलस्वरूपधृक् ॥ ८६ ॥

वैष्णवी विष्णुपूज्या च वैष्णवाङ्गनिवासिनी ।
विष्णुपूजकपूज्या च वैष्णवे संस्थिता तनुः ॥ ८७ ॥

नारायणस्य देहस्था नारायणमनोहरा ।
नारायणस्वरूपा च नारायणमनःस्थिता ॥ ८८ ॥

नारायणाङ्गसम्भूता नारायणप्रिया तनुः ।
नारी नारायणी गण्या नारायणगृहप्रिया ॥ ८९ ॥

हरपूज्या हरश्रेष्ठा हरस्य वल्लभा क्षमा ।
संहारी हरदेहस्था हरपूजनतत्परा ॥ ९० ॥

हरदेहसमुद्भूता हराङ्गवासिनी कुहूः ।
हरपूजकपूज्या च हरवन्दकतत्परा ॥ ९१ ॥

हरदेहसमुत्पन्ना हरक्रीडा सदागतिः ।
सुगणा सङ्गरहिता असङ्गा सङ्गनाशिनी ॥ ९२ ॥

निर्जना विजना दुर्गा दुर्गक्लेशनिवारिणी ।
दुर्गदेहान्तका दुर्गारूपिणी दुर्गतस्थिता ॥ ९३ ॥

प्रेतप्रिया प्रेतकरा प्रेतदेहसमुद्भवा ।
प्रेताङ्गवासिनी प्रेता प्रेतदेहविमर्दका ॥ ९४ ॥

डाकिनी योगिनी कालरात्रिः कालप्रिया सदा ।
कालरात्रिहरा काला कृष्णदेहा महातनुः ॥ ९५ ॥

कृष्णाङ्गी कुटिलाङ्गी च वज्राङ्गी वज्ररूपधृक् ।
नानादेहधरा धन्या षट्चक्रक्रमवासिनी ॥ ९६ ॥

मूलाधारनिवासी च मूलाधारस्थिता सदा ।
वायुरूपा महारूपा वायुमार्गनिवासिनी ॥ ९७ ॥

वायुयुक्ता वायुकरा वायुपूरकपूरका ।
वायुरूपधरा देवी सुषुम्नामार्गगामिनी ॥ ९८ ॥

देहस्था देहरूपा च देहध्येया सुदेहिका ।
नाडीरूपा महीरूपा नाडीस्थाननिवासिनी ॥ ९९ ॥

इङ्गला पिङ्गला चैव सुषुम्नामध्यवासिनी ।
सदाशिवप्रियकरी मूलप्रकृतिरूपधृक् ॥ १०० ॥

अमृतेशी महाशाली शृङ्गाराङ्गनिवासिनी ।
उत्पत्तिस्थितिसंहन्त्री प्रलया पदवासिनी ॥ १०१ ॥

महाप्रलययुक्ता च सृष्टिसंहारकारिणी ।
स्वधा स्वाहा हव्यवाहा हव्या हव्यप्रिया सदा ॥ १०२ ॥

हव्यस्था हव्यभक्षा च हव्यदेहसमुद्भवा ।
हव्यक्रीडा कामधेनुस्वरूपा रूपसम्भवा ॥ १०३ ॥

सुरभिर्नन्दनी पुण्या यज्ञाङ्गी यज्ञसम्भवा ।
यज्ञस्था यज्ञदेहा च योनिजा योनिवासिनी ॥ १०४ ॥

अयोनिजा सती सत्या असती कुटिलातनुः ।
अहल्या गौतमी गम्या विदेहा देहनाशिनी ॥ १०५ ॥

गान्धारी द्रौपदी दूती शिवप्रिया त्रयोदशी ।
पौर्णमासी पञ्चदशी पञ्चमी च चतुर्दशी ॥ १०६ ॥

षष्ठी च नवमी चैव अष्टमी दशमी तथा ।
एकादशी द्वादशी च द्वाररूपाऽभयप्रदा ॥ १०७ ॥

सङ्क्रान्तिः सामरूपा च कुलीना कुलनाशिनी ।
कुलकान्ता कृशा कुम्भा कुम्भदेहविवर्धिनी ॥ १०८ ॥

विनीता कुलवत्यर्था अन्तरी चानुगाप्युषा ।
नदी सागरदा शान्तिः शान्तिरूपा सुशान्तिका ॥ १०९ ॥

आशा तृष्णा क्षुधा क्षोभ्या क्षोभरूपनिवासिनी ।
गङ्गा सागरगा कान्तिः श्रुतिः स्मृतिर्धृतिर्मही ॥ ११० ॥

दिवा रात्रिः पञ्चभूतदेहा चैव सुदेहका ।
तण्डुला छिन्नमस्ता च नागयज्ञोपवीतिनी ॥ १११ ॥

वर्णिनी डाकिनी शक्तिः कुरुकुल्ला सुकुल्लका।
प्रत्यङ्गिराऽपरा देवी अजिता जयदायिनी॥ ११२॥

जया च विजया चैव महिषासुरघातिनी।
मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी॥ ११३॥

निशुम्भशुम्भहननी रक्तबीजक्षयङ्करी।
काशी काशीनिवासा च मधुरा पार्वती परा॥ ११४॥

अपर्णा चण्डिका देवी मृडानी चाम्बिका कला।
शुक्ला कृष्णा वर्ण्यवर्णा शरदिन्दुकलाकृतिः॥ ११५॥

रुक्मिणी राधिका चैव भैरव्याः परिकीर्त्तितम्।
अष्टाधिकसहस्रन्तु देव्या नामानुकीर्त्तनात्॥ ११६॥

महापातकयुक्तोऽपि मुच्यते नात्र संशयः।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः॥ ११७॥

महापातककोटचस्तु तथा चैवोपपातकाः।
स्तोत्रेण भैरवोक्तेन सर्वं नश्यति तत्क्षणात्॥ ११८॥

सर्वं वा श्लोकमेकं वा पठनात्स्मरणादपि।
पठेद्वा पाठयेद्वापि सद्यो मुच्येत बन्धनात्॥ ११९॥

राजद्वारे रणे दुर्गे सङ्कटे गिरिदुर्गमे।
प्रान्तरे पर्वते वापि नौकायां वा महेश्वरि॥ १२०॥

वह्निदुर्गभये प्राप्ते सिंहव्याघ्रभयाकुले।
पठनात्स्मरणान्मर्त्यो मुच्यते सर्वसङ्कटात्॥ १२१॥

अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत्।
सर्वशास्त्रपरो विप्रः सर्वयज्ञफलं लभेत्॥ १२२॥

॥ इति श्रीविश्वसारे महाभैरवविरचितं श्रीमत्त्रिपुरभैरवीसहस्रनामस्तोत्रं समाप्तम्॥

# श्री धूमावती ध्यानम्

विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा ॥

काकध्वजरथारूढा विलम्बित पयोधरा
शूर्पहस्तातिरूक्षाक्षा धूतहस्ता वरान्विता ।
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा ।
क्षुत्पिपासार्दिता ध्येया भयदा कलहास्पदा ॥

अत्युच्चा मलिनांबराऽखिलजनोद्वेगावहा दुर्मना
रूक्षाक्षित्रितया विशालदशना सूर्योदरी चञ्चला ।
प्रस्वेदाम्बुचिता क्षुधाकुलतनुः कृष्णाऽतिरूक्षप्रभा
ध्येया मुक्तकचा सदाप्रियकलिर्धूमावती मन्त्रिणा ॥

# श्री धूमावती-अष्टोत्तरशतनामस्तोत्रम्

ईश्वर उवाच ॥

धूमावती धूम्रवर्णा धूम्रपानपरायणा ।
धूम्राक्षमथिनी धन्या धन्यस्थाननिवासिनी ॥ १ ॥

अघोराचारसन्तुष्टा अघोराचारमण्डिता ।
अघोरमन्त्रसम्प्रीता अघोरमन्त्रपूजिता ॥ २ ॥

अट्टाट्टहासनिरता मलिनाम्बरधारिणी ।
वृद्धा विरूपा विधवा विद्या च विरलद्विजा ॥ ३ ॥

प्रवृद्धघोणा कुमुखी कुटिला कुटिलेक्षणा ।
कराली च करालास्या कङ्काली शूर्पधारिणी ॥ ४ ॥

काकध्वजा रथारूढा केवला कठिना कुहूः ।
क्षुत्पिपासार्दिता नित्याललज्जिह्वा दिगम्बरी ॥ ५ ॥

दीर्घोदरी दीर्घरवा दीर्घाङ्गी दीर्घमस्तका ।
विमुक्तकुन्तला कीर्त्त्या कैलासस्थानवासिनी ॥ ६ ॥

क्रूरा कालस्वरूपा च कालचक्रप्रवर्त्तिनी ।
विवर्णा चञ्चला दुष्टा दुष्टविध्वंसकारिणी ॥ ७ ॥

चण्डी चण्डस्वरूपा च चामुण्डा चण्डनिस्वना ।
चण्डवेगा चण्डगतिश्चण्डमुण्डविनाशिनी ॥ ८ ॥

चाण्डालिनी चित्ररेखा चित्राङ्गी चित्ररूपिणी ।
कृष्णा कपर्दिनी कुल्ला कृष्णारूपा क्रियावती ॥ ९ ॥

कुम्भस्तनी महोन्मत्ता मदिरापानविह्वला ।
चतुर्भुजा ललज्जिह्वा शत्रुसहारकारिणी ॥ १० ॥

शवारूढा शवगता श्मशानस्थानवासिनी ।
दुराराध्या दुराचारा दुर्जनप्रीतिदायिनी ॥ ११ ॥

निर्मांसा च निराकारा धूतहस्ता वरान्विता ।
कलहा च कलिप्रीता कलिकल्मषनाशिनी ॥ १२ ॥

महाकालस्वरूपा च महाकालप्रपूजिता ।
महादेवप्रिया मेधा महासङ्कटनाशिनी ॥ १३ ॥

भक्तप्रिया भक्तगतिर्भक्तशत्रुविनाशिनी ।
भैरवी भुवना भीमा भारती भुवनात्मिका ॥ १४ ॥

भेरुण्डा भीमनयना त्रिनेत्रा बहुरूपिणी ।
त्रिलोकेशी त्रिकालज्ञा त्रिस्वरूपा त्रयीतनुः ॥ १५ ॥

त्रिमूर्तिश्च तथा तन्वी त्रिशक्तिश्च त्रिशूलिनी ।
इति धूमा-महत्स्तोत्रं नाम्नामष्टशतात्मकम् ॥ १६ ॥

मया ते कथितं देवि शत्रुसङ्घविनाशनम् ।
कारागारे रिपुग्रस्ते महोत्पाते महाभये ॥ १७ ॥

इदं स्तोत्रं पठेन्मर्त्यो मुच्यते सर्वसङ्कटैः ।
गुह्याद्गुह्यतरं गुह्यं गोपनीयं प्रयत्नतः ॥ १८ ॥
चतुष्पदार्थदं नृणां सर्वसम्पत्प्रदायकम् ॥ १९ ॥

# श्री धूमावती सहस्रनामस्तोत्रम्

श्रीभैरव्युवाच ॥

धूमावत्या धर्मरात्र्याः कथयस्व महेश्वर ।
सहस्रनामस्तोत्रं मे सर्वसिद्धिप्रदायकम् ॥ १ ॥

श्रीभैरव उवाच ॥

शृणु देवि महामाये प्रिये प्राणस्वरूपिणि ।
सहस्रनामस्तोत्रं मे भवशत्रुविनाशनम् ॥ २ ॥

अस्य श्रीधूमावतीसहस्रनामस्तोत्रस्य पिप्पलाद ऋषिः,पंक्तिश्छन्दः, धूमावती देवता, शत्रुविनिग्रहे पाठे विनियोगः

धूमा धूमवती धूमा धूमपानपरायणा ।
धौताधौतगिरां धाम्नी धूमेश्वरनिवासिनी ॥ ३ ॥

अनन्ताऽनन्तरूपा च अकाराकाररूपिणी ।
आद्या आनन्ददानन्दा इकारा इन्द्ररूपिणी ॥ ४ ॥

धनधान्यार्थवाणीदा यशोधर्मप्रियेष्टदा ।
भाग्यसौभाग्यभक्तिस्था गुहापर्वतवासिनी ॥ ५ ॥

रामरावणसुग्रीव मोहदा हनुमत्प्रिया ।
वेदशास्त्रपुराणज्ञा ज्योतिश्छन्दःस्वरूपिणी ॥ ६ ॥

चातुर्यचारुरुचिरारञ्जनप्रेमतोषदा ।
कमलाससुधावक्त्रा चन्द्रहासस्मितानना ॥ ७ ॥

चतुरा चारुकेशी च चतुर्वर्गप्रदा मुदा ।
कलाकालधरा धीरा धारिणी वसुनीरदा ॥ ८ ॥

हीरा हीरकवर्णाभा हरिणायतलोचना ।
दम्भमोहक्रोधलोभस्नेहद्वेषहरा परा ॥ ९ ॥

नरदेवकरी रामा रामानन्दमनोहरा ।
योगभोगक्रोधलोभहरा हरनमस्कृता ॥ १० ॥

दानमानज्ञानमान-पानगान-सुखप्रदा ।
गजगोश्वपदागञ्जा भूतिदा भूतनाशिनी ॥ ११ ॥

भवभावा तथा बाला वरदा हरवल्लभा ।
भगभङ्गभया माला मालती तालनाददा ॥ १२ ॥

जालवालहालकालकपालप्रियवादिनी ।
करञ्जशीलगुञ्जाढ्या चूताङ्कुरनिवासिनी ॥ १३ ॥

पनसस्था पानसक्ता पनसेशकुटुम्बिनी ।
पावनी पावनाधारा पूर्णा पूर्णमनोरथा ॥ १४ ॥

पूता पूतकला पौरा पुराणसुरसुन्दरी ।
परेशी परदा पारा परात्मा परमोहिनी ॥ १५ ॥

जगन्माया जगत्कर्त्री जगत्कीर्तिर्जगन्मयी ।
जननी जयिनी जाया जिता जिनजयप्रदा ॥ १६ ॥

कीर्तिज्ञानध्यानमानदायिनी दानवेश्वरी ।
काव्यव्याकरणज्ञाना प्रज्ञाप्रज्ञानदायिनी ॥ १७ ॥

विज्ञाज्ञा विज्ञजयदा विज्ञाविज्ञप्रपूजिता ।
परावरेज्या वरदा पारदा शारदादरा ॥ १८ ॥

दारिणी देवदूती च मदनामदनामदा ।
परमज्ञानगम्या च परेशी परगा परा ॥ १९ ॥

यज्ञायज्ञाप्रदा यज्ञज्ञानकार्यकरी शुभा ।
शोभिनी शुंभमथिनी निशुम्भासुरमर्दिनी ॥ २० ॥

शाम्भवी शम्भुपत्नी च शम्भुजाया शुभानना ।
शाङ्करी शङ्कराराध्या सन्ध्या सन्ध्यासुधर्मिणी ॥ २१ ॥

शत्रुघ्नी शत्रुहा शत्रुप्रदा शात्रवनाशिनी ।
शैवी शिवलया शैला शैलराजप्रिया सदा ॥ २२ ॥

शर्वरी शबरी शम्भुः सुधाढ्या सौधवासिनी ।
सगुणागुणरूपा च गौरवी भैरवीरवा ॥ २३ ॥

गौराङ्गी गौरदेहा च गौरी गुरुमती गुरुः ।
गौर्गौर्गव्यस्वरूपा च गुणानन्दस्वरूपिणी ॥ २४ ॥

गणेशगणदा गुण्यगुणा गौरववाञ्छिता ।
गणमाता गणाराध्या गणकोटिविनाशिनी ॥ २५ ॥

दुर्गा दुर्जनहन्त्री च दुर्जनप्रीतिदायिनी ।
स्वर्गापवर्गदा दात्री दीनादीनदयावती ॥ २६ ॥

दुर्निरीक्ष्या दुरादुःस्था दौःस्थ्यभञ्जनकारिणी ।
श्वेतपाण्डुरकृष्णाभा कालदा कालनाशिनी ॥ २७ ॥

कर्मनर्मकरी नर्मा धर्माधर्मविनाशिनी ।
गौरीगौरवदा गोदा गणदा गायनप्रिया ॥ २८ ॥

गङ्गा भागीरथी भङ्गा भगा भाग्यविवर्धिनी ।
भवानी भवहन्त्री च भैरवी भैरवीसमा ॥ २९ ॥

भीमाभीमरवा भैमी भीमानन्दप्रदायिनी ।
शरण्या शरणा शम्या शशिनी शङ्खनाशिनी ॥ ३० ॥

गुणागुणकरौ गौणीप्रिया प्रीतिप्रदायिनी ।
जनमोहनकर्त्री च जगदानन्ददायिनी ॥ ३१ ॥

जिताजाया च विजया विजयाजयदायिनी ।
कामा काली करालास्या खर्वा खञ्जा खरा गदा ॥ ३२ ॥

गर्वा गरुत्मती घर्मा घर्घरा घोरनादिनी ।
चराचरी चराराध्या छिन्नाच्छिन्नमनोरथा ॥ ३३ ॥

छिन्नमस्ता जयाजाप्या जगज्जाया च झर्झरी ।
झकारा झीष्कृतिष्टीका टङ्का टङ्कारनादिनी ॥ ३४ ॥

ठीका ठक्कुरठक्काङ्गी ठठठाङ्कारढुण्ढुरा ।
ढुण्ढीताराजतीर्णा च तालस्थभ्रमनाशिनी ॥ ३५ ॥

थकारा थकरा दात्री दीपा दीपविनाशिनी ।
धन्या धनाधनवती नर्मदा नर्ममोदिनी ॥ ३६ ॥

पद्मा पद्मावती पीतास्फान्ता फूत्कारकारिणी ।
फुल्ला ब्रह्ममयी ब्राह्मी ब्रह्मानन्दप्रदायिनी ॥ ३७ ॥

भवाराध्या भवाध्यक्षा भगालीमन्दगामिनी ।
मदिरा मदिरेक्षा च यशोदा यमपूजिता ॥ ३८ ॥

याम्या राम्या रामरूपा रमणी ललिता लता।
लङ्केशी वाक्प्रदा वाच्या सदाश्रमनिवासिनी॥ ३९॥

श्रान्ता शकाररूपा च षकारखरवाहना।
सह्याद्रिरूपा सानन्दा हरिणीहरिरूपिणी॥ ४०॥

हराराध्या बालवाचालवङ्गप्रेमतोषिता।
क्षपाक्षयप्रदा क्षीरा अकारादिस्वरूपिणी॥ ४१॥

कालिका कालमूर्त्तिश्च कलहा कलहप्रिया।
शिवा शन्दायिनी सौम्या शत्रुनिग्रहकारिणी॥ ४२॥

भवानी भवमूर्तिश्च शर्वाणी सर्वमङ्गला।
शत्रुविद्राविणी शैवी शुम्भासुरविनाशिनी॥ ४३॥

धकारमन्त्ररूपा च धूम्बीजपरितोषिता।
धनाध्यक्षस्तुता धीरा धरारूपा धरावती॥ ४४॥

चर्विणी चन्द्रपूज्या च छन्दोरूपा छटावती।
छाया छायावती स्वच्छा छेदिनी भेदिनी क्षमा॥ ४५॥

वल्गिनी वर्धिनी वन्द्या वेदमाता बुधस्तुता।
धारा धारावती धन्या धर्मदानपरायणा॥ ४६॥

गर्विणी गुरुपूज्या च ज्ञानदात्री गुणान्विता।
धर्मिणी धर्मरूपा च घण्टानादपरायणा॥ ४७॥

घण्टानिनादिनी घूर्णाघूर्णिता घोररूपिणी।
कलिघ्नी कलिदूती च कलिपूज्या कलिप्रिया॥ ४८॥

कालनिर्णाशिनी काल्या काव्यदा कालरूपिणी।
वर्षिणी वृष्टिदा वृष्टिर्महावृष्टिनिवारिणी॥ ४९॥

घातिनी घाटिनी घोण्टा घातकी घनरूपिणी ।
धूम्बीजा धूञ्जपानन्दा धूम्बीजजपतोषिता ॥ ५० ॥

धून्धूम्बीजजपासक्ता धूंधूंबीजपरायणा ।
धूंकारहर्षिणी धूमा धनदा धनगर्विता ॥ ५१ ॥

पद्मावती पद्ममाला पद्मयोनिप्रपूजिता ।
अपारा पूरणी पूर्णा पूर्णिमा परिवन्दिता ॥ ५२ ॥

फलदा फलभोक्त्री च फलिनी फलदायिनी ।
फूत्कारिणी फलावाप्त्री फलभोक्त्री फलान्विता ॥ ५३ ॥

वारिणी वारणप्रीता वारिपाथोधिपारगा ।
विवर्णा धूम्रनयना धूम्राक्षी धूम्ररूपिणी ॥ ५४ ॥

नीतिर्नीतिस्वरूपा च नीतिज्ञा नयकोविदा ।
तारिणीताररूपा च तत्त्वज्ञानपरायणा ॥ ५५ ॥

स्थूला स्थूलाधरा स्थात्री उत्तमस्थानवासिनी ।
स्थूला पद्मपदस्थाना स्थानभ्रष्टा स्थलस्थिता ॥ ५६ ॥

शोषिणी शोभिनी शीता शीतपानीयपायिनी ।
शारिणी शङ्खिनी शुद्धा शङ्खासुरविनाशिनी ॥ ५७ ॥

शर्वरी शर्वरीपूज्या शर्वरीशप्रपूजिता ।
शर्वरीजाग्रिता योग्या योगिनी योगिवन्दिता ॥ ५८ ॥

योगिनीगणसंसेव्या योगिनीयोगभाविता ।
योगमार्गरता युक्ता योगमार्गानुसारिणी ॥ ५९ ॥

योगभावा योगयुक्ता यामिनीपतिवन्दिता ।
अयोग्या योधिनी योद्ध्री युद्धकर्मविशारदा ॥ ६० ॥

युद्धमार्गरता नान्ता युद्धस्थाननिवासिनी ।
सिद्धा सिद्धेश्वरी सिद्धिः सिद्धिगेहनिवासिनी ॥ ६१ ॥

सिद्धरीतिस्सिद्धप्रीतिः सिद्धा सिद्धान्तकारिणी ।
सिद्धगम्या सिद्धपूज्या सिद्धवन्द्या सुसिद्धिदा ॥ ६२ ॥

साधिनी साधनप्रीता साध्या साधनकारिणी ।
साधनीया साध्यसाध्या साध्यसङ्घसुशोभिनी ॥ ६३ ॥

साध्वी साधुस्वभावा सा साधुसन्ततिदायिनी ।
साधुपूज्या साधुवन्द्या साधुसन्दर्शनोद्यता ॥ ६४ ॥

साधुदृष्टा साधुपृष्टा साधुपोषणतत्परा ।
सात्त्विकी सत्त्वसंसिद्धा सत्त्वसेव्या सुखोदया ॥ ६५ ॥

सत्त्ववृद्धिकरी शान्ता सत्त्वसंहर्षमानसा ।
सत्त्वज्ञाना सत्त्वविद्या सत्त्वसिद्धान्तकारिणी ॥ ६६ ॥

सत्त्ववृद्धिस्सत्वसिद्धिस्सत्त्वसम्पन्नमानसा ।
चारुरूपा चारुदेहा चारुचञ्चललोचना ॥ ६७ ॥

छद्मिनी छद्मसङ्कल्पा छद्मवार्ता क्षमाप्रिया ।
हठिनी हठसम्प्रीतिर्हठवार्ता हठोद्यमा ॥ ७८ ॥

हठकार्या हठधर्मा हठकर्मपरायणा ।
हठसम्भोगनिरता हठात्काररतिप्रिया ॥ ६९ ॥

हठसम्भेदिनी हृद्या हृद्यवार्ता हरिप्रिया ।
हरिणी हरिणीदृष्टिर्हरिणीमांसभक्षणा ॥ ७० ॥

हरिणाक्षी हरिणपा हरिणीगणहर्षदा ।
हरिणीगणसंहर्त्री हरिणीपरिपोषिका ॥ ७१ ॥

हरिणीमृगयासक्ता हरिणीमानपुरस्सरा ।
दीना दीनाकृतिर्दूना द्राविणी द्रविणप्रदा ॥ ७२ ॥

द्रविणाचलसंवासा द्रविता द्रव्यसंयुता ।
दीर्घा दीर्घपदा दृश्या दर्शनीया दृढाकृतिः ॥ ७३ ॥

दृढा द्विष्टमतिर्दुष्टा द्वेषिणी द्वेषिभञ्जिनी ।
दोषिणी दोषसंयुक्ता दुष्टशत्रुविनाशिनी ॥ ७४ ॥

देवतार्त्तिहरा दुष्टदैत्यसङ्घविदारिणी ।
दुष्टदानवहन्त्री च दुष्टदैत्यनिषूदिनी ॥ ७५ ॥

देवताप्राणदा देवी देवदुर्गतिनाशिनी ।
नटनायकसंसेव्या नर्तकी नर्तकप्रिया ॥ ७६ ॥

नाट्यविद्या नाट्यकर्त्री नादिनी नादकारिणी ।
नवीननूतना नव्या नवीनवस्त्रधारिणी ॥ ७७ ॥

नव्यभूषा नव्यमाल्या नव्यालङ्कारशोभिता ।
नकारवादिनी नम्या नवभूषण भूषिता ॥ ७८ ॥

नीचमार्गा नीचभूमिर्नीचमार्गगतिर्गतिः ।
नाथसेव्या नाथभक्ता नाथानन्दप्रदायिनी ॥ ७९ ॥

नम्रा नम्रगतिर्नेत्री निदानवाक्यवादिनी ।
नारीमध्यस्थिता नारी नारीमध्यगताऽनघा ॥ ८० ॥

नारीप्रीतिर्नराराध्या नरनामप्रकाशिनी ।
रती रतिप्रिया रम्या रतिप्रेमा रतिप्रदा ॥ ८१ ॥

रतिस्थानस्थिताराध्या रतिहर्षप्रदायिनी ।
रतिरूपा रतिध्याना रतिरीतिसुधारिणी ॥ ८२ ॥

रतिरासमहोल्लासा रतिरासविहारिणी।
रतिकान्तस्तुता राशी राशिरक्षणकारिणी॥ ८३ ॥

अरूपा शुद्धरूपा च सुरूपा रूपगर्विता।
रूपयौवनसम्पन्ना रूपराशी रमावती॥ ८४ ॥

रोधिनी रोषिणी रुष्टा रोषिरुद्धा रसप्रदा।
मादिनी मदनप्रीता मधुमत्ता मधुप्रदा॥ ८५ ॥

मद्यपा मद्यपध्येया मद्यपप्राणरक्षिणी।
मद्यपानन्दसन्दात्री मद्यपप्रेमतोषिता॥ ८६ ॥

मद्यपानरता मत्ता मद्यपानविहारिणी।
मदिरा मदिरासक्ता मदिरापानहर्षिणी॥ ८७ ॥

मदिरापानसन्तुष्टा मदिरापानमोहिनी।
मदिरामानसा मुग्धा माध्वीपा मदिराप्रदा॥ ८८ ॥

माध्वीदानसदानन्दा माध्वीपानरता मदा।
मोदिनी मोदसन्दात्री मुदिता मोदमानसा॥ ८९ ॥

मोदकर्त्री मोददात्री मोदमङ्गलकारिणी।
मोदकादानसन्तुष्टा मोदकग्रहणक्षमा॥ ९० ॥

मोदकालब्धिसङ्क्रुद्धा मोदकप्राप्तितोषिणी।
मांसादा मांससम्भक्षा मांसभक्षणहर्षिणी॥ ९१ ॥

मांसपाकपरप्रेमा मांसपाकालयस्थिता।
मत्स्यमांसकृतास्वादा मकारपञ्चकान्विता॥ ९२ ॥

मुद्रा मुद्रान्विता माता महामोहा मनस्विनी।
मुद्रिका मुद्रिकायुक्ता मुद्रिकाकृतलक्षणा॥ ९३ ॥

मुद्रिकालङ्कृता माद्री मन्दराचलवासिनी।
मन्दराचलसंसेव्या मन्दराचलवासिनी ॥ ९४ ॥

मन्दरध्येयपादाब्जा मन्दरारण्यवासिनी।
मन्दुरावासिनी मन्दा मारिणी मारिकामिता ॥ ९५ ॥

महामारी महामारीशमनी शवसंस्थिता।
शवमांसकृताहारा श्मशानालयवासिनी ॥ ९६ ॥

श्मशानसिद्धिसंहृष्टा श्मशानभवनस्थिता।
श्मशानशयनागारा श्मशानभस्मलेपिता ॥ ९७ ॥

श्मशानभस्मभीमाङ्गी श्मशानावासकारिणी।
शामिनी शमनाराध्या शमनस्तुतिवन्दिता ॥ ९८ ॥

शमनाचारसन्तुष्टा शमनागारवासिनी।
शमनस्वामिनी शान्तिः शान्तसज्जनपूजिता ॥ ९९ ॥

शान्तपूजापरा शान्ता शान्तागारप्रभोजिनी।
शान्तपूज्या शान्तवन्द्या शान्तग्रहसुधारिणी ॥ १०० ॥

शान्तरूपा शान्तियुक्ता शान्तचन्द्रप्रभामला।
अमला विमला म्लाना मालतीकुञ्जवासिनी ॥ १०१ ॥

मालतीपुष्पसम्प्रीता मालतीपुष्पपूजिता।
महोग्रा महती मध्या मध्यदेशनिवासिनी ॥ १०२

मध्यमध्वनिसम्प्रीता मध्यमध्वनिकारिणी।
मध्यमा मध्यमप्रीतिर्मध्यमप्रेमपूरिता ॥ १०३ ॥

मध्याङ्गचित्रवसना मध्यखिन्ना महोद्धता।
महेन्द्रकृतसम्पूजा महेन्द्रपरिवन्दिता ॥ १०४ ॥

महेन्द्रजालसंयुक्ता महेन्द्रजालकारिणी।
महेन्द्रमानिताऽमाना मानिनीगणमध्यगा ॥ १०५ ॥

मानिनीमानसम्प्रीता मानविध्वंसकारिणी।
मानिन्याकर्षिणी मुक्तिर्मुक्तिदात्री सुमुक्तिदा ॥ १०६ ॥

मुक्तिद्वेषकरी मूल्यकारिणी मूल्यहारिणी।
निर्मूला मूलसंयुक्ता मूलिनी मूलमन्त्रिणी ॥ १०७ ॥

मूलमन्त्रकृतार्हाद्या मूलमन्त्रार्घ्यहर्षिणी।
मूलमन्त्रप्रतिष्ठात्री मूलमन्त्रप्रहर्षिणी ॥ १०८ ॥

मूलमन्त्रप्रसन्नास्या मूलमन्त्रप्रपूजिता।
मूलमन्त्रप्रणेत्री च मूलमन्त्रकृतार्चना ॥ १०९ ॥

मूलमन्त्रप्रहृष्टात्मा मूलविद्या मलापहा।
विद्याऽविद्या वटस्था च वटवृक्षनिवासिनी ॥ ११० ॥

वटवृक्षकृतस्थाना वटपूजापरायणा।
वटपूजापरिप्रीता वटदर्शनलालसा ॥ १११ ॥

वटपूजाकृताह्लादा वटपूजाविवर्धिनी।
वशिनी विवशाराध्या वशीकरणमन्त्रिणी ॥ ११२ ॥

वशीकरणसम्प्रीता वशीकारकसिद्धिदा।
वटुका वटुकाराध्या वटुकाहारदायिनी ॥ ११३ ॥

वटुकार्चापरा पूज्या वटुकार्चाविवर्धिनी।
वटुकानन्दकर्त्री च वटुकप्राणरक्षिणी ॥ ११४ ॥

वटुकेज्याप्रदाऽपारा पारिणी पार्वतीप्रिया।
पर्वताग्रकृतावासा पर्वतेन्द्रप्रपूजिता ॥ ११५ ॥

पार्वतीपतिपूज्या च पार्वतीपतिहर्षदा।
पार्वतीपतिबुद्धिस्था पार्वतीपतिमोहिनी ॥ ११६ ॥

पार्वतीयद्विजाराध्या पर्वतस्था प्रतारिणी।
पद्मला पद्मिनी पद्मा पद्ममालाविभूषिता ॥ ११७ ॥

पद्मजेड्यपदा पद्ममालालङ्कृतमस्तका।
पद्मार्चितपदद्वन्द्वा पद्महस्तपयोधिजा ॥ ११८ ॥

पयोधिपारगन्त्री च पाथोधिपरिकीर्तिता।
पाथोधिपारगा पूता पल्वलाम्बुप्रतर्पिता ॥ ११९ ॥

पल्वलान्तः पयोमग्ना पवमानगतिर्गतिः।
पयःपाना पयोदात्री पानीयपरिकाङ्क्षिणी ॥ १२० ॥

पयोजमालाभरणा मुण्डमालाविभूषणा।
मुण्डिनी मुण्डहन्त्री च मुण्डिता मुण्डशोभिता ॥ १२१ ॥

मणिभूषा मणिग्रीवा मणिमालाविराजिता।
महामोहा महामर्षा महामाया महाहवा ॥ १२२ ॥

मानवी मानवीपूज्या मनुवंशविवर्धिनी।
मठिनी मठसंहन्त्री मठसम्पत्तिहारिणी ॥ १२३ ॥

महाक्रोधवती मूढा मूढशत्रुविनाशिनी।
पाठीनभोजिनी पूर्णा पूर्णहारविहारिणी ॥ १२४ ॥

प्रलयानलतुल्याभा प्रलयानलरूपिणी।
प्रलयार्णवसम्मग्ना प्रलयाब्धिविहारिणी ॥ १२५ ॥

महाप्रलयसम्भूता महाप्रलयकारिणी।
महाप्रलयसम्प्रीता महाप्रलयसाधिनी ॥ १२६ ॥

महामहाप्रलयेज्या महाप्रलयमोदिनी ।
छेदिनी छिन्नमुण्डोग्रा छिन्ना छिन्नरुहार्थिनी ॥ १२७ ॥

शत्रुसञ्छेदिनी छन्ना क्षोदिनी क्षोदकारिणी ।
लक्षिणी लक्षसम्पूज्या लक्षिता लक्षणान्विता ॥ १२८ ॥

लक्षशस्त्रसमायुक्ता लक्षबाणप्रमोचिनी ।
लक्षपूजापराऽलक्ष्या लक्षकोदण्डखण्डिनी ॥ १२९ ॥

लक्षकोदण्डसंयुक्ता लक्षकोदण्डधारिणी ।
लक्षलीलालया लभ्या लाक्षागारनिवासिनी ॥ १३० ॥

लक्षलोभपरा लोला लक्षभक्तप्रपूजिता ।
लोकिनी लोकसम्पूज्या लोकरक्षणकारिणी ॥ १३१ ॥

लोकवन्दितपादाब्जा लोकमोहनकारिणी ।
ललिता लालितालीना लोकसंहारकारिणी ॥ १३२ ॥

लोकलीलाकरी लोक्या लोकसम्भवकारिणी ।
भूतशुद्धिकरी भूतरक्षिणी भूततोषिणी ॥ १३३ ॥

भूतवेतालसंयुक्ता भूतसेनासमावृता ।
भूतप्रेतपिशाचादिस्वामिनी भूतपूजिता ॥ १३४ ॥

डाकिनी शाकिनी डेया डिण्डिमारावकारिणी ।
डमरूवाद्यसन्तुष्टा डमरुवाद्यकारिणी ॥ १३५ ॥

हुङ्कारकारिणी होत्री हाविनी हवनार्थिनी ।
हासिनी ह्वासिनी हास्यहर्षिणी हठनादिनी ॥ १३६ ॥

अट्टाट्टहासिनी टीका टीकानिर्माणकारिणी ।
टङ्किनी टङ्किता टङ्का टङ्कमात्रसुवर्णदा ॥ १३७ ॥

टङ्कारिणी टकाराढ्या शत्रुत्रोटनकारिणी ।
त्रुटिता त्रुटिरूपा च त्रुटिसन्देहकारिणी ॥ १३८ ॥

तर्षिणी तृट्परिक्लान्ता क्षुत्क्षामा क्षुत्परिप्लुता ।
अक्षिणी तक्षिणी भिक्षाप्रार्थिनी शत्रुभक्षिणी ॥ १३९ ॥

काङ्क्षिणी कुट्टनी क्रूरा कुट्टनीवेश्मवासिनी ।
कुट्टनीकोटिसम्पूज्या कुट्टनीकुलमार्गिणी ॥ १४० ॥

कुट्टनीकुलसंरक्ष्या कुट्टनीकुलरक्षिणी ।
कालपाशावृता कन्या कुमारीपूजनप्रिया ॥ १४१ ॥

कौमुदी कौमुदीहृष्टा करुणादृष्टिसंयुता ।
कौतुकाचारनिपुणा कौतुकागारवासिनी ॥ १४२ ॥

काकपक्षधरा काकरक्षिणी काकसंवृता ।
काकाङ्करथसंस्थाना काकाङ्कस्यन्दनास्थिता ॥ १४३ ॥

काकिनी काकदृष्टिश्च काकभक्षणदायिनी ।
काकमाता काकयोनिः काकमण्डलमण्डिता ॥ १४४ ॥

काकदर्शनसंशीला काकसङ्कीर्णमन्दिरा ।
काकध्यानस्थदेहादिध्यानगम्याऽधमावृता ॥ १४५ ॥

धनिनी धनिसंसेव्या धनच्छेदनकारिणी ।
धुन्धुरा धुन्धुराकारा धूम्रलोचनघातिनी ॥ १४६ ॥

धूङ्कारिणी च धूम्मन्त्रपूजिता धर्मनाशिनी ।
धूम्रवर्णिनी धूम्राक्षी धूम्राक्षासुरघातिनी ॥ १४७ ॥

धूम्बीजजपसन्तुष्टा धूम्बीजजपमानसा ।
धूम्बीजजपपूजार्हा धूम्बीजजपकारिणी ॥ १४८ ॥

धूम्बीजाकर्षिता धृष्या धर्षिणी धृष्टमानसा ।
धूलीप्रक्षेपिणी धूलीव्याप्तधम्मिल्लधारिणी ॥ १४९ ॥

धूम्बीजजपमालाढ्या धूम्बीजनिन्दकान्तका ।
धर्मविद्वेषिणी धर्मरक्षिणी धर्मतोषिता ॥ १५० ॥

धारास्तम्भकरी धूर्ता धारावारिविलासिनी ।
धांधींधूंधैंमन्त्रवर्णा धौंधःस्वाहास्वरूपिणी ॥ १५१ ॥

धरित्रीपूजिता धूर्वा धान्यच्छेदनकारिणी ।
धिक्कारिणी सुधीपूज्या धामोद्यानविनिवासिनी ॥ १४२ ॥

धामोद्यानपयोदात्री धामधूलीप्रधूलिता ।
महाध्वनिमती धूप्यधूपामोदप्रहर्षिणी ॥ १५३ ॥

धूपदानमतिप्रीता धूपदानविनोदिनी ।
धीवरीगणसम्पूज्या धीवरीवरदायिनी ॥ १५४ ॥

धीवरीगणमध्यस्था धीवरीधामवासिनी ।
धीवरीगणगोप्त्री च धीवरीगणतोषिता ॥ १५५ ॥

धीवरीधनदात्री च धीवरीप्राणरक्षिणी ।
धात्रीशा धातृसम्पूज्या धात्रीवृक्षसमाश्रया ॥ १५६ ॥

धात्रीपूजनकर्त्री च धात्रीरोपणकारिणी ।
धूम्रपानरतासक्ता धूम्रपानरतेष्टदा ॥ १५७ ॥

धूम्रपानकरानन्दा धूम्रवर्षणकारिणी ।
धन्यशब्दश्रुतिप्रीता धुन्धुकारीजनच्छिदा ॥ १५८ ॥

धुन्धुकारीष्टसन्दात्री धुन्धुकारिसुमुक्तिदा ।
धुन्धुकार्याराध्यरूपा धुन्धुकारिमनस्स्थिता ॥ १५९ ॥

धुन्धुकारिहिताकाङ्क्षा धुन्धुकारिहितैषिणी ।
धिन्धिमाराविणी ध्यातृध्यानगम्या धनार्थिनी ॥ १६० ॥

धोरिणीधोरणप्रीता धारिणी धोररूपिणी ।
धरित्रीरक्षिणी देवी धराप्रलयकारिणी ॥ १६१ ॥

धराधरसुताऽशेषधाराधरसमद्युतिः ।
धनाध्यक्षा धनप्राप्तिर्धनधान्यविवर्धिनी ॥ १६२ ॥

धनाकर्षणकर्त्री च धनाहरणकारिणी।
धनच्छेदनकर्त्री च धनहीना धनप्रिया॥ १६३॥
धनसंवृद्धिसम्पन्ना धनदानपरायणा॥ १६४॥
धनहृष्टा धनपुष्टा दानाध्ययनकारिणी।
धनरक्षा धनप्राणा धनानन्दकरी सदा॥ १६५॥
शत्रुहन्त्री शवारूढा शत्रुसंहारकारिणी।
शत्रुपक्षक्षतिप्रीता शत्रुपक्षनिषूदिनी॥ १६६॥
शत्रुग्रीवाच्छिदाच्छाया शत्रुपद्धतिखण्डिनी।
शत्रुप्राणहराहार्या शत्रून्मूलनकारिणी॥ १६७॥
शत्रुकार्यविहन्त्री च साङ्गशत्रुविनाशिनी।
साङ्गशत्रुकुलच्छेत्री शत्रुसद्मप्रदाहिनी॥ १६८॥
साङ्गसायुधसर्वारि-सर्वसम्पत्तिनाशिनी।
साङ्गसायुधसर्वारि-देहगेहप्रदाहिनी॥ १६९॥
इतीदं धूमरूपिण्यास्स्तोत्रं नाम सहस्रकम्।
यः पठेच्छून्यभवने सध्वान्ते यतमानसः॥ १७०॥
मदिरामोदयुक्तो वै देवीध्यानपरायणः।
तस्य शत्रुः क्षयं याति यदि शक्रसमोऽपि वै॥ १७१॥
भवपाशहरं पुण्यं धूमावत्याः प्रियं महत्।
स्तोत्रं सहस्रनामाख्यं मम वक्त्राद्विनिर्गतम्।
पठेद्वा शृणुयाद्वापि शत्रुघातकरो भवेत्॥ १७२॥

इति धूमावती सहस्रनामस्तोत्रम्।

# बगलामुखी (पीताम्बरी) ध्यानम्

मध्ये सुधाब्धिमणिमण्डपरत्नवेदी-
सिंहासनोपरि गतां परिपीतवर्णाम् ।
पीतांबराभरणमाल्यविभूषिताङ्गीं
देवीं नमामि धृतमुद्गरवैरिजिह्वाम् ॥ १ ॥

जिह्वाग्रमादाय करेण देवीं वामेन शत्रून्परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन पीतांबराढ्यां द्विभुजां नमामि ॥ २ ॥

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभांगरुचिं शशाङ्कमुकुटां सच्चंपकस्रग्युताम् ।
हस्तैर्मुद्गरपाश वज्ररशनाः संबिभ्रतीं भूषणैः
व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तंभिनीं चिन्तये ॥ ३ ॥

# श्री बगलामुखी-अष्टोत्तर शतनामस्तोत्रम्

नारद उवाच ॥

भगवन्देवदेवेश सृष्टिस्थितिलयात्मक ।
शतमष्टोत्तरं नाम्नां बगलाया वदाधुना ॥ १ ॥

श्रीभगवानुवाच ।
शृणु वत्स प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ।
पीताम्बर्या महादेव्याः स्तोत्रं पापप्रणाशनम् ॥ २ ॥

यस्य प्रपठनात्सद्यो वादी मूको भवेत्क्षणात् ।
रिपूणां स्तम्भनं याति सत्यं सत्यं वदाम्यहम् ॥ ३ ॥

अस्य श्रीपीताम्बर्यष्टोत्तरशतनामस्तोत्रस्य, सदाशिव ऋषिः,
अनुष्टुप्छन्दः, श्रीपीताम्बरी देवता, श्रीपीताम्बरीप्रीतये नामपारायणे

विनियोगः ॥

ॐ बगला विष्णुवनिता विष्णुशङ्करभामिनी ।
बहुला वेदमाता च महाविष्णुप्रसूरपि ॥ १ ॥

महामत्स्य महाकूर्म महावाराहरूपिणी ।
नरसिंहप्रिया रम्या वामना वटुरूपिणी ॥ २ ॥

जामदग्न्यस्वरूपा च रामा रामप्रपूजिता ।
कृष्णा कपर्दिनी कृत्या कलहा कलिकारिणी ॥ ३ ॥

बुद्धिरूपा बुद्धभार्या बौद्धपाखण्डखण्डिनी ।
कल्किरूपा कलिहरा कलिदुर्गतिनाशिनी ॥ ४ ॥

कोटिसूर्यप्रतीकाशा कोटिकन्दर्पमोहिनी ।
केवला कठिना काली कला कैवल्यदायिनी ॥ ५ ॥

केशवीकेशवाराध्या किशोरी केशवस्तुता ।
रुद्ररूपा रुद्रमूर्तिः रुद्राणी रुद्रदेवता ॥ ६ ॥

नक्षत्ररूपा नक्षत्रा नक्षत्रेशप्रपूजिता ।
नक्षत्रेशप्रिया नित्या नक्षत्रपतिवन्दिता ॥ ७ ॥

नागिनी नागजननी नागराजप्रवन्दिता ।
नागेश्वरी नागकन्या नागरी च नगात्मजा ॥ ८ ॥

नगाधिराजतनया नगराजप्रपूजिता ।
नवीना नीरदा पीता श्यामा सौन्दर्यकारिणी ॥ ९ ॥

रक्ता नीला घना शभ्रा श्वेता सौभाग्यदायिनी ।
सुन्दरी सौभगा सौम्या स्वर्णाभा स्वर्गतिप्रदा ॥ १० ॥

रिपुत्रासकरी रेखा शत्रुसंहारकारिणी ।
भामिनी च तथा मायास्तम्भिनी मोहिनी शुभा ॥ ११ ॥

रागद्वेषकरी रात्री रौरवध्वंसकारिणी ।
यक्षिणीसिद्धनिवहा सिद्धेशा सिद्धरूपिणी ॥ १२ ॥

लङ्कापतिध्वंसकरी लङ्केशरिपुवन्दिता ।
लङ्कानाथकुलहरा महारावणहारिणी ॥ १३ ॥

देवदानवसिद्धौघपूजिता परमेश्वरी ।
पराणुरूपा परमा परतन्त्रविनाशिनी ॥ १४ ॥

वरदा वरदाराध्या वरदानपरायणा ।
वरदेशप्रिया वीरा वीरभूषणभूषिता ॥ १५ ॥

वसुदा बहुदा वाणी ब्रह्मरूपा वरानना ।
बलदा पीतवसना पीतभूषणभूषिता ॥ १६ ॥

पीतपुष्पप्रिया पीतहारा पीतस्वरूपिणी ।
इति ते कथितं विप्र नाम्नामष्टोत्तरं शतम् ॥ १७ ॥

यः पठेत्पाठयेद्वापि शृणुयाद्वा समाहितः ।
तस्य शत्रुः क्षयं सद्यो याति नैवात्र संशयः ॥ १८ ॥

प्रभातकाले प्रयतो मनुष्यः पठेत्सुभक्त्या परिचिन्त्य पीताम् ।
द्रुतं भवेत्तस्य समस्तवृद्धिर्विनाशमायाति च तस्य शत्रुः ॥ १९ ॥

इति विष्णुयामले नारदविष्णुसंवादे श्रीबगलाष्टोत्तरशतनामस्तोत्रम् ॥

# ।। श्री बगलामुखी(पीतांबरी) सहस्रनामस्तोत्रम् ।।

सुरालयप्रधाने तु देवदेवं महेश्वरम् ।
शैलाधिराजतनया सङ्ग्रहे तमुवाच ह ।। १ ।।

श्रीदेव्युवाच ।।
परमेष्ठिन्परन्धाम प्रधानपरमेश्वर ।
नाम्नां सहस्रं बगलामुख्या मे ब्रूहि वल्लभ ।। २ ।।

ईश्वर उवाच ।।

शृणु देवि प्रवक्ष्यामि नामधेयसहस्रकम् ।
परब्रह्मास्त्रविद्यायाश्चतुर्वर्गफलप्रदम् ।। ३ ।।

गुह्याद्गुह्यतरं देवि सर्वसिद्धैकवन्दितम् ।
अतिगुप्ततरं विद्या सर्वतन्त्रेषु गोपिता ।। ४ ।।

विशेषतः कलियुगे महासिद्ध्यौघदायिनी ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ।। ५ ।।

अप्रकाश्यमिदं सत्यं स्वयोनिरिव सुव्रते ।
रोधिनी विघ्नसङ्घानां मोहिनी परयोषिताम् ।। ६ ।।

स्तम्भिनी राजसैन्यानां वादिनी परवादिनाम् ।
पुरा चैकार्णवे घोरे काले परमभैरवः ।। ७ ।।

सुन्दरीसहितो देवः केशवः क्लेशनाशनः ।
उरगासनमासीनो योगनिद्रामुपागमत् ।। ८ ।।

निद्राकाले च ते काले मया प्रोक्तः सनातनः ।
महास्तम्भकरं देवि स्तोत्रं वा शतनामकम् ।। ९ ।।

सहस्रनाम परमं वद देवस्य कस्यचित् ।
॥ श्रीभगवानुवाच ॥

शृणु शङ्कर देवेश परमातिरहस्यकम् ॥ १० ॥

अजोऽहं यत्प्रसादेन विष्णुः सर्वेश्वरेश्वरः ॥
गोपनीयं प्रयत्नेन प्रकाशात्सिद्धिहानिकृत् ॥ ११ ॥

अस्य श्रीपीताम्बरीसहस्रनामस्तोत्रमन्त्रस्य, भगवान्सदाशिव ऋषिः, अनुष्टुप्छन्दः, श्रीजगद्वश्यकरी पीताम्बरी देवता, सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः । ध्यानं-

पीताम्बरपरीधानां पीनोन्नतपयोधराम् ।
जटामुकुटशोभाढ्यां पीतभूमिसुखासनाम् ॥ १२ ।

शत्रोर्जिह्वां मुद्गरञ्च बिभ्रतीं परमां कलाम् ।
सर्वागमपुराणेषु विख्यातां भुवनत्रये ॥ १३ ॥

सृष्टिस्थितिविनाशानामादिभूतां महेश्वरीम् ।
गोप्यां सर्वप्रयत्नेन शृणु तां कथयामि ते ॥ १४ ॥

जगद्विध्वंसिनीं देवीमजरामरकारिणीम् ।
तां नमामि महामायां महदैश्वर्यदायिनीम् ॥ १५ ॥

प्रणवं पूर्वमुद्धृत्य स्थिरमायां ततो वदेत् ।
बगलामुखि सर्वेति दुष्टानां वाचमेव च ॥ १६ ॥

मुखं पदं स्तम्भयेति जिह्वां कीलय बुद्धिमत् ।
विनाशयेति तारञ्च स्थिरमायां ततो वदेत् ॥ १७ ॥

वह्निप्रियां ततो मन्त्रश्चतुर्वर्गफलप्रदः ।
ओं ब्रह्मास्त्रं ब्रह्मविद्या च ब्रह्ममाता सनातनी ॥ १८ ॥

ब्रह्मेशी ब्रह्मकैवल्यबगला ब्रह्मचारिणी ।
नित्यानन्दा नित्यसिद्धा नित्यरूपा निरामया ॥ १९ ॥

सन्धारिणी महामाया कटाक्षक्षेमकारिणी ।
कमला विमला नीलरत्नकान्तिगुणाश्रिता ॥ २० ॥

कामप्रिया कामरता कामकामस्वरूपिणी ।
मङ्गला विजया जाया सर्वमङ्गलकारिणी ॥ २१ ॥

कामिनी कामिनीकाम्या कामुका कामचारिणी ।
कामप्रिया कामरता कामकामस्वरूपिणी ॥ २२ ॥

कामाख्या कामबीजस्था कामपीठनिवासिनी ।
कामदा कामहा काली कपाली च करालिका ॥ २३ ॥

कंसारिः कमला कामा कैलासेश्वरवल्लभा ।
कात्यायनी केशवा च करुणा कामकेलिभुक् ॥ २४ ॥

क्रियाकीर्त्तिः कृत्तिका च काशिका मथुरा शिवा ।
कालाक्षी कालिका कालीधवलाननसुन्दरी ॥ २५ ॥

खेचरी च खमूर्त्तिश्च क्षुद्राक्षुद्रक्षुधावरा ।
खड्गहस्ता खड्गरता खड्गिनी खर्परप्रिया ॥ २६ ॥

गङ्गा गौरी गामिनी च गीता गोत्रविवर्धिनी ।
गोधरा गोकरा गोधा गन्धर्वपुरवासिनी ॥ २७ ॥

गन्धर्वा गन्धर्वकलागोपनी गरुडासना ।
गोविन्दभावा गोविन्दा गान्धारी गन्धमादिनी ॥ २८ ॥

गौराङ्गी गोपिकामूर्तिर्गोपीगोष्ठनिवासिनी ।
गन्धा गजेन्द्रगामान्या गदाधरप्रियाग्रहा ॥ २९ ॥

घोरघोरा घोररूपा घनश्रोणी घनप्रभा ।
दैत्येन्द्रप्रबला घण्टावादिनी घोरनिस्वना ॥ ३० ॥

डाकिन्युमा उपेन्द्रा च उर्वशी उरगासना ।
उत्तमा उन्नता उन्ना उत्तमस्थानवासिनी ॥ ३१ ॥

चामुण्डा मुण्डिता चण्डी चण्डदर्पहरेति च ।
उग्रचण्डा चण्डचण्डा चण्डदैत्यविनाशिनी ॥ ३२ ॥

चण्डरूपा प्रचण्डा च चण्डाचण्डशरीरिणी ।
चतुर्भुजा प्रचण्डा च चराचरनिवासिनी ॥ ३३ ॥

छत्रप्रायशिरोवाहा छलाच्छलतरा छली ।
क्षत्ररूपा क्षत्रधरा क्षत्रियक्षयकारिणी ॥ ३४ ॥

जया च जयदुर्गा च जयन्ती जयदा परा ।
जायिनीजयिनी ज्योत्स्नाजटाधरप्रियाऽजिता ॥ ३५ ॥

जितेन्द्रिया जितक्रोधा जयमाना जनेश्वरी ।
जितमृत्युर्जरातीता जाह्नवी जनकात्मजा ॥ ३६ ॥

झङ्कारा झञ्झरीझण्टा झङ्कारीझकशोभिनी ।
झखाझमेशा झङ्कारीयोनिकल्याणदायिनी ॥ ३७ ॥

झञ्झरा झमुरीझारा झराझरतरा परा ।
झञ्झाझमेता झङ्कारीझणाकल्याणदायिनी ॥ ३८ ॥

ञमुनामानसी चिन्त्या ञमुनाशङ्करप्रिया ।
टङ्कारीटिटिका टीका टङ्किनी च टवर्गगा ॥ ३९ ॥

टापाटोपा टटपतिष्टमनी टमनप्रिया ।
ठकारधारिणी ठीकाठङ्करी ठिकरप्रिया ॥ ४० ॥

ठेकठासा ठकरतीठामिनी ठमनप्रिया ।
डारहा डाकिनी डाराडामरा डमरप्रिया ॥ ४१ ॥

डखिनी डडयुक्ता च डमरूकरवल्लभा ।
ढक्काढक्कीढक्कनादा ढोलशब्दप्रबोधिनी ॥ ४२ ॥

ढामिनीढामनप्रीता ढगतन्त्रप्रकाशिनी ।
अनेकरूपिणी अम्बा अणिमासिद्धिदायिनी ॥ ४३ ॥

अमन्त्रिणी अणुकरी अणुमद्भानुसंस्थिता ।
तारातन्त्रवती तन्त्रतत्त्वरूपा तपस्विनी ॥ ४४ ॥

तरङ्गिणी तत्त्वपरा तन्त्रिकातन्त्रविग्रहा ।
तपोरूपा तत्त्वदात्री तपःप्रीतिप्रधर्षिणी ॥ ४५ ॥

तन्त्रयन्त्रार्चनपरा तलातलनिवासिनी ।
तल्पदा त्वल्पदा काम्या स्थिरा स्थिरतरा स्थितिः ॥ ४६ ॥

स्थाणुप्रिया स्थाणुपरा स्थितास्थानप्रदायिनी ।
दिगम्बरा दयारूपा दावाग्निदमनीदमा ॥ ४७ ॥

दुर्गा दुर्गपरादेवी दुष्टदैत्यविनाशिनी ।
दमनप्रमदा दैत्यदयादानपरायणा ॥ ४८ ॥

दुर्गार्तिनाशिनी दान्ता दम्भिनी दम्भवर्जिता ।
दिगम्बरप्रिया दम्भा दैत्यदम्भविदारिणी ॥ ४९ ॥

दमनाशनसौन्दर्या दानवेन्द्रविनाशिनी ।
दयाधरा च दमनी दर्भपत्रविलासिनी ॥ ५० ॥

धरणीधारिणी धात्री धराधरधरप्रिया ।
धराधरसुता देवी सुधर्माधर्मचारिणी ॥ ५१ ॥

धर्मज्ञा धवलाधूला धनदा धनवर्धिनी।
धीराऽधीरा धीरतरा धीरसिद्धिप्रदायिनी ॥ ५२ ॥

धन्वन्तरिधराधीरा ध्येयध्यानस्वरूपिणी।
नारायणी नारसिंही नित्यानन्दनरोत्तमा ॥ ५३ ॥

नक्तानक्तावती नित्या नीलजीमूतसन्निभा।
नीलाङ्गी नीलवस्त्रा च नीलपर्वतवासिनी ॥ ५४ ॥

सुनीलपुष्पखचिता नीलजम्बूसमप्रभा।
नित्याख्या षोडशी विद्या नित्या नित्यसुखावहा ॥ ५५ ॥

नर्मदा नन्दनानन्दा नन्दानन्दविवर्धिनी।
यशोदानन्दतनया नन्दनोद्यानवासिनी ॥ ५६ ॥

नागान्तका नागवृद्धा नागपत्नी च नागिनी।
नमिताशेषजनता नमस्कारवती नमः ॥ ५७ ॥

पीताम्बरा पार्वती च पीताम्बरविभूषिता।
पीतमाल्याम्बरधरा पीताभा पिङ्गमूर्धजा ॥ ५८ ॥

पीतपुष्पार्चनरता पीतपुष्पसमर्चिता।
परप्रभा पितृपतिः परसैन्यविनाशिनी ॥ ५९ ॥

परमा परतन्त्रा च परमन्त्रा परात्परा।
परा विद्या परा सिद्धिः परास्थानप्रदायिनी ॥ ६० ॥

पुष्पा पुष्पवती नित्यं पुष्पमालाविभूषिता।
पुरातना पूर्वपरा परसिद्धिप्रदायिनी ॥ ६१ ॥

पीतानितम्बिनी पीता पीनोन्नतपयस्स्तनी।
प्रेमाप्रमध्यमाशेषा पद्मपत्रविलासिनी ॥ ६२ ॥

पद्मावती पद्मनेत्रा पद्मा पद्ममुखीपरा।
पद्मासना पद्मप्रिया पद्मरागस्वरूपिणी ॥ ६३ ॥

पावनी पालिका पात्री परदाऽवरदा शिवा।
प्रेतसंस्था परानन्दा परब्रह्मस्वरूपिणी ॥ ६४ ॥

जिनेश्वरप्रिया देवी पशुरक्तरतप्रिया।
पशुमांसप्रियाऽपर्णा परामृतपरायणा ॥ ६५ ॥

पाशिनी पाशिका चापि पशुघ्नी पशुभाषिणी।
फुल्लारविन्दवदनी फुल्लोत्पलशरीरिणी ॥ ६६ ॥

परानन्दप्रदा वीणा पशुपाशविनाशिनी।
फूत्कारा फुत्परा फेणी फुल्लेन्दीवरलोचना ॥ ६७ ॥

फट्मन्त्रा स्फटिका स्वाहा स्फोटा च फट्स्वरूपिणी।
स्फाटिका घुटिका घोरा स्फटिकाद्रिस्वरूपिणी ॥ ६८ ॥

वराङ्गना वरधरा वाराही वासुकीवरा।
बिन्दुस्था बिन्दुनीवाणी बिन्दुचक्रनिवासिनी ॥ ६९ ॥

विद्याधरी विशालाक्षी काशीवासिजनप्रिया।
वेदविद्या विरूपाक्षी विश्वयुग्बहुरूपिणी ॥ ७० ॥

ब्रह्मशक्तिर्विष्णुशक्तिः पञ्चवक्त्रा शिवप्रिया।
वैकुण्ठवासिनी देवी वैकुण्ठपददायिनी ॥ ७१ ॥

ब्रह्मरूपा विष्णुरूपा परब्रह्ममहेश्वरी।
भवप्रिया भवोद्भावा भवरूपा भवोत्तमा ॥ ७२ ॥

भवपारा भवाधारा भाग्यवत्प्रियकारिणी।
भद्रा सुभद्रा भवदा शुम्भदैत्यविनाशिनी ॥ ७३ ॥

भवानी भैरवी भीमा भद्रकाली सुभद्रिका।
भगिनी भगरूपा च भगमाना भगोत्तमा ॥ ७४ ॥

भगप्रिया भगवती भगवासा भगाकरा।
भगसृष्टा भाग्यवती भगरूपा भगासिनी ॥ ७५ ॥

भगलिङ्गप्रिया देवी भगलिङ्गपरायणा।
भगलिङ्गस्वरूपा च भगलिङ्गविनोदिनी ॥ ७६ ॥

भगलिङ्गरता देवी भगलिङ्गनिवासिनी।
भगमाला भगकला भगाधारा भगाम्बरा ॥ ७७ ॥

भगवेगा भगाभूषा भगेन्द्रा भाग्यरूपिणी।
भगलिङ्गाङ्गसम्भोगा भगलिङ्गासवावहा ॥ ७८ ॥

भगलिङ्गसमाधुर्या भगलिङ्गनिवेशिता।
भगलिङ्गसुपूजा च भगलिङ्गसमन्विता ॥ ७९ ॥

भगलिङ्गविरक्ता च भगलिङ्गसमावृता।
माधवी माधवीमान्या मधुरा मधुमानिनी ॥ ८० ॥

मन्दहासा महामाया मोहिनी महदुत्तमा।
महामोहा महाविद्या महाघोरा महास्मृतिः ॥ ८१ ॥

मनस्विनी मानवती मोदिनी मधुरानना।
मेनका मानिनीमान्या मणिरत्नविभूषणा ॥ ८२ ॥

मल्लिकामौलिकामाला मालाधरमदोत्तमा।
मदनासुन्दरी मेधा मधुमत्ता मधुप्रिया ॥ ८३ ॥

मत्तहंसीसमोन्नासा मत्तसिंहमहासनी।
महेन्द्रवल्लभा भीमा मौल्यञ्चमिथुनात्मजा ॥ ८४ ॥

महाकाल्या महाकाली महाबुद्धिर्महोत्कटा।
माहेश्वरी महामाया महिषासुरघातिनी ॥ ८५ ॥

मधुरा कीर्त्तिमत्ता च मत्तमातङ्गगामिनी।
मदप्रिया मांसरता मत्तयुक्कामकारिणी ॥ ८६ ॥

मैथुन्यवल्लभा देवी महानन्दा महोत्सवा।
मरीचिर्मारतिर्माया मनोबुद्धिप्रदायिनी ॥ ८७ ॥

मोहा मोक्षा महालक्ष्मीर्महत्पदप्रदायिनी।
यमरूपा च यमुना जयन्ती च जयप्रदा ॥ ८८ ॥

याम्या यमवती युद्धा यदोः कुलविवर्धिनी।
रमारामा रामपत्नी रत्नमालारतिप्रिया ॥ ८९ ॥

रत्नसिंहासनस्था च रत्नाभरणमण्डिता।
रमणी रमणीया च रत्यारसपरायणा ॥ ९० ॥

रतानन्दा रतवती रघूणां कुलवर्धिनी।
रमणारिपरिभ्राज्या रैधा राधिकरत्नजा ॥ ९१ ॥

रावीरसस्वरूपा च रात्रिराजसुखावहा।
ऋतुजा ऋतुदा ऋद्धा ऋतुरूपा ऋतुप्रिया ॥ ९२ ॥

रक्तप्रिया रक्तवती रङ्गिणी रक्तदन्तिका।
लक्ष्मीर्लज्जा लतिका च लीलालग्नानिताक्षिणी ॥ ९३ ॥

लीला लीलावती लोमहर्षाह्लादनपट्टिका।
ब्रह्मस्थिता ब्रह्मरूपा ब्रह्मणा वेदवन्दिता ॥ ९४ ॥

ब्रह्मोद्भवा ब्रह्मकला ब्रह्माणी ब्रह्मबोधिनी।
वेदाङ्गना वेदरूपा वनिता विनतावसा ॥ ९५ ॥

बाला च युवती वृद्धा ब्रह्मकर्मपरायणा।
विन्ध्यस्था विन्ध्यवासी च बिन्दुयुग्बिन्दुभूषणा ॥ ९६ ॥

विद्यावती वेदधारी व्यापिका बर्हिणी कला।
वामाचारप्रिया वह्निर्वामाचारपरायणा ॥ ९७ ॥

वामाचाररता देवी वामदेवप्रियोत्तमा।
बुद्धेन्द्रिया विबुद्धा च बुद्धाचरणमालिनी ॥ ९८ ॥

बन्धमोचनकर्त्री च वारुणा वरुणालया।
शिवा शिवप्रिया शुद्धा शुद्धाङ्गी शुक्लवर्णिका ॥ ९९ ॥

शुक्लपुष्पप्रिया शुक्ला शिवधर्मपरायणा।
शुक्लस्था शुक्लिनी शुक्लरूपशुक्लपशुप्रिया ॥ १०० ॥

शुक्रस्था शुक्रिणी शुक्रा शुक्ररूपा च शुक्रिका।
षण्मुखी च षडङ्गा च षट्चक्रविनिवासिनी ॥ १०१ ॥

षड्ग्रन्थियुक्ता षोढा च षण्माता च षडात्मिका।
षडङ्गयुवती देवी षडङ्गप्रकृतिर्वशी ॥ १०२ ॥

षडानना षड्रसा च षष्ठीषष्ठेश्वरीप्रिया।
षड्जवादा षोडशी च षोढान्यासस्वरूपिणी ॥ १०३ ॥

षट्चक्रभेदनकरी षट्चक्रस्थस्वरूपिणी।
षोडशस्वररूपा च षण्मुखी षट्पदान्विता ॥ १०४ ॥

सनकादिस्वरूपा च शिवधर्मपरायणा।
सिद्धसप्तस्वरी शुद्धा सुरमाता सुरोत्तमा ॥ १०५ ॥

सिद्धविद्या सिद्धमाता सिद्धा सिद्धस्वरूपिणी।
हरा हरिप्रियाहारा हरिणीहारयुक् तथा ॥ १०६ ॥

हरिरूपा हरिधरा हरिणाक्षी हरिप्रिया।
हेतुप्रिया हेतुरता हिताहितस्वरूपिणी ॥ १०७ ॥

क्षमा क्षमावती क्षीता क्षुद्रघण्टाविभूषणा।
क्षयङ्करी क्षितीशा च क्षीणमध्यसुशोभना ॥ १०८ ॥

अजाऽनन्ता अपर्णा च अहल्याशेषशायिनी।
स्वान्तर्गता च साधूनामन्तरानन्दरूपिणी ॥ १०९ ॥

अरूपा अमला चार्धा अनन्तगुणशालिनी।
स्वविद्या विद्यकाविद्या विद्या चार्विन्दुलोचना ॥ ११० ॥

अपराजिता जातवेदा अजपा अमरावती।
अल्पा स्वल्पा अनल्पाद्या अणिमासिद्धिदायिनी ॥ १११ ॥

अष्टसिद्धिप्रदा देवी रूपलक्षणसंयुता।
अरविन्दमुखा देवी भोगसौख्यप्रदायिनी ॥ ११२ ॥

आदिविद्या आदिभूता आदिसिद्धिप्रदायिनी।
सीत्काररूपिणी देवी सर्वासनविभूषिता ॥ ११३ ॥

इन्द्रप्रिया च इन्द्राणी इन्द्रप्रस्थनिवासिनी।
इन्द्राक्षी इन्द्रवज्रा च इन्द्रमद्योक्षणी तथा ॥ ११४ ॥

ईलाकामनिवासा च ईश्वरीश्वरवल्लभा।
जननी चेश्वरी दीनाभेदा चेश्वरकर्मकृत् ॥ ११५ ॥

उमा कात्यायनी ऊर्ध्वा मीना चोत्तरवासिनी।
उमापतिप्रिया देवी शिवा चोङ्काररूपिणी ॥ ११६ ॥

उरगेन्द्रशिरोरत्ना उरगोरगवल्लभा।
उद्यानवासिनी माला प्रशस्तमणिभूषणा ॥ ११७ ॥

ऊर्ध्वदन्तोत्तमाङ्गी च उत्तमा चोर्ध्वकेशिनी।
उमासिद्धिप्रदा या च उरगासनसंस्थिता॥ ११८॥

ऋषिपुत्री ऋषिच्छन्दा ऋद्धिसिद्धिप्रदायिनी।
उत्सवोत्सवसीमन्ता कामिका च गुणान्विता॥ ११९॥

एला एकारविद्या च एणीविद्याधरा तथा।
ॐकारावलयोपेता ॐकारपरमा कला॥ १२०॥

ॐवदवदवाणी च ॐकाराक्षरमण्डिता।
ऐन्द्री कुलिशहस्ता च ॐलोकपरवासिनी॥ १२१।

ॐकारमध्यबीजा च ॐनमोरूपधारिणी।
परब्रह्मस्वरूपा च अंशुकांशुकवल्लभा॥ १२२॥

ॐकारा अःफड्मन्त्रा च अक्षाक्षरविभूषिता।
अमन्त्रा मन्त्ररूपा च पदशोभासमन्विता॥ १२३॥

प्रणवोङ्काररूपा च प्रणवोच्चारभाक् पुनः।
ह्रींकाररूपा ह्रीङ्कारी वाग्बीजाक्षरभूषणा॥ १२४॥

हृल्लेखा सिद्धियोगा च हृत्पद्मासनसंस्थिता।
बीजाख्या नेत्रहृदया ह्रीम्बीजा भुवनेश्वरी॥ १२५॥

क्लींकामराजा क्लिन्ना च चतुर्वर्गफलप्रदा।
क्लींक्लींक्लींरूपिका देवी क्रींक्रींक्रींनामधारिणी॥ १२६॥

कमलाशक्तिबीजा च पाशाङ्कुशविभूषिता।
श्रींश्रींकारा महाविद्या श्रद्धा श्रद्धावती तथा॥ १२७॥

ॐऐंक्लींह्रींश्रींपरा च क्लीङ्कारी परमा कला।
ह्रींक्लींश्रीङ्कारस्वरूपा सर्वकर्मफलप्रदा॥ १२८॥

सर्वाढ्या सर्वदेवी च सर्वसिद्धिप्रदा तथा ।
सर्वज्ञा सर्वशक्तिश्च वाग्विभूतिप्रदायिनी ॥ १२९ ॥

सर्वमोक्षप्रदा देवी सर्वभोगप्रदायिनी ।
गुणेन्द्रवल्लभा वामा सर्वशक्तिप्रदायिनी ॥ १३० ॥

सर्वानन्दमयी चैव सर्वसिद्धिप्रदायिनी ।
सर्वचक्रेश्वरी देवी सर्वसिद्धेश्वरी तथा ॥ १३१ ॥

सर्वप्रियङ्करी चैव सर्वसौख्यप्रदायिनी ।
सर्वानन्दप्रदा देवी ब्रह्मानन्दप्रदायिनी ॥ १३२ ॥

मनोवाञ्छितदात्री च मनोबुद्धिसमन्विता ।
अकारादि-क्षकारान्ता दुर्गा दुर्गार्तिनाशिनी ॥ १३३ ॥

पद्मनेत्रा सुनेत्रा च स्वधास्वाहावषट्करी ।
स्वर्वर्गा देववर्गा च तवर्गा च समन्विता ॥ १३४ ॥

अन्तस्स्था वेश्मरूपा च नवदुर्गा नरोत्तमा ।
तत्त्वसिद्धिप्रदा नीला तथा नीलपताकिनी ॥ १३५ ॥

नित्यरूपा निशाकारी स्तम्भिनी मोहिनीति च ।
वशङ्करी तथोच्चाटी उन्मादी कर्षिणीति च ॥ १३६ ॥

मातङ्गी मधुमत्ता च अणिमा लघिमा तथा ।
सिद्धा मोक्षप्रदा नित्या नित्यानन्दप्रदायिनी ॥ १३७ ॥

रक्ताङ्गी रक्तनेत्रा च रक्तचन्दनभूषिता ।
स्वल्पसिद्धिस्सुकल्पा च दिव्यचारणशुक्रभा ॥ १३८ ॥

सङ्क्रान्तिस्सर्वविद्या च सप्तवासरभूषिता ।
प्रथमा च द्वितीया च तृतीया च चतुर्थिका ॥ १३९ ॥

पञ्चमी चैव षष्ठी च विशुद्धा सप्तमी तथा।
अष्टमी नवमी चैव दशम्येकादशी तथा॥ १४० ॥

द्वादशी त्रयोदशी च चतुर्दश्यथ पूर्णिमा।
अमावास्या तथा पूर्वा उत्तरा परिपूर्णिमा॥ १४१ ॥

खड्गिनी चक्रिणी घोरा गदिनी शूलिनी तथा।
भुशुण्डी चापिनी बाणा सर्वायुधविभूषणा॥ १४२ ॥

कुलेश्वरी कुलवती कुलाचारपरायणा।
कुलकर्मसुरक्ता च कुलाचारप्रवर्धिनी॥ १४३ ॥

कीर्तिश्श्रीश्च रमा रामा धर्मायै सततंनमः।
क्षमा धृतिः स्मृतिर्मेधा कल्पवृक्षनिवासिनी॥ १४४ ॥

उग्रा उग्रप्रभा गौरी वेदविद्याविबोधिनी।
साध्या सिद्धा सुसिद्धा च विप्ररूपा तथैव च॥ १४५ ॥

काली कराली काल्या च कला दैत्यविनाशिनी।
कौलिनी कालिकी चैव क-च-ट-त-पवर्णिका॥ १४६ ॥

जयिनी जययुक्ता च जयदा जृम्भिणी तथा।
स्राविणी द्राविणी देवी भेरुण्डा विन्ध्यवासिनी॥ १४७ ॥

ज्योतिर्भूता च जयदा ज्वालामालासमाकुला।
भिन्ना भिन्नप्रकाशा च विभिन्नाभिन्नरूपिणी॥ १४८ ॥

अश्विनी भरणी चैव नक्षत्रसम्भवानिला।
काश्यपी विनताख्याता दितिजाऽदितिरेव च॥ १४९ ॥

कीर्त्तिः कामप्रिया देवी कीर्त्या कीर्तिविवर्द्धिनी।
सद्योमांससमालब्धा सद्यश्छिन्नासिशङ्करा॥ १५० ॥

दक्षिणा चोत्तरा पूर्वा पश्चिमा दिक् तथैव च।
अग्निनैर्ऋतिवायव्या ईशान्यादिक् तथा स्मृता ॥ १५१ ॥

ऊर्ध्वाङ्गाधोगता श्वेता कृष्णा रक्ता च पीतका।
चतुर्वर्गा चतुर्वर्णा चतुर्मात्रात्मिकाक्षरा ॥ १५२ ॥

चतुर्मुखी चतुर्वेदा चतुर्विद्या चतुर्मुखा।
चतुर्गणा चतुर्माता चतुर्वर्गफलप्रदा ॥ १५३ ॥

धात्रीविधात्रीमिथुना नारी नायकवासिनी।
सुरामुदामुदवती मेदिनी मेनकात्मजा ॥ १५४ ॥

ऊर्ध्वकाली सिद्धिकाली दक्षिणाकालिका शिवा।
नीला सरस्वती सा त्वं बगला छिन्नमस्तका ॥ १५५ ॥

सर्वेश्वरी सिद्धविद्या परा परमदेवता।
हिङ्गुला हिङ्गुलाङ्गी च हिङ्गुलाधरवासिनी ॥ १५६ ॥

हिङ्गुलोत्तमवर्णाभा हिङ्गुलाभरणा च सा।
जाग्रती च जगन्माता जगदीश्वरवल्लभा ॥ १५७ ॥

जनार्दनप्रिया देवी जययुक्ता जयप्रदा।
जगदानन्दकारी च जगदाह्लादकारिणी ॥ १५८ ॥

ज्ञानदानकरी यज्ञा जानकी जनकप्रिया।
जयन्ती जयदा नित्या ज्वलदग्निसमप्रभा ॥ १५९ ॥

विद्याधरा च बिम्बोष्ठी कैलासचलवासिनी।
विभवा वडवाग्निश्च अग्निहोत्रफलप्रदा ॥ १६० ॥

मन्त्ररूपा परा देवी तथैव गुरुरूपिणी।
गया गङ्गा गोमती च प्रभासा पुष्करापि च ॥ १६१ ॥

विन्ध्याचलरता देवी विन्ध्याचलनिवासिनी।
बहुर्बहुसुन्दरी च कंसासुरविनाशिनी ॥ १६२ ॥

शूलिनी शूलहस्ता च वज्रा वज्रहरापि च।
दुर्गा शिवा शान्तिकरी ब्रह्माणी ब्राह्मणप्रिया ॥ १६३ ॥

सर्वलोकप्रणेत्री च सर्वरोगहरापि च।
मङ्गला शोभना शुद्धा निष्कला परमा कला ॥ १६४ ॥

विश्वेश्वरी विश्वमाता ललिता वासिताननना।
सदाशिवा उमा क्षेमा चण्डिका चण्डविक्रमा ॥ १६५ ॥

सर्वदेवमयी देवी सर्वागमभयापहा।
ब्रह्मेशविष्णुनमिता सर्वकल्याणकारिणी ॥ १६६ ॥

योगिनीयोगमाता च योगीन्द्रहृदयस्थिता।
योगिजाया योगवती योगीन्द्रानन्दयोगिनी ॥ १६७ ॥

इन्द्रादिनमिता देवी ईश्वरी चेश्वरप्रिया।
विशुद्धिदा भयहरा भक्तद्वेषिभयङ्करी ॥ १६८ ॥

भववेषा कामिनी च भेरुण्डा भवकारिणी।
बलभद्रप्रियाकारा संसारार्णवतारिणी ॥ १६९ ॥

पञ्चभूता सर्वभूता विभूतिर्भूतिधारिणी।
सिंहवाहा महामोहा मोहपाशविनाशिनी ॥ १७० ॥

मन्दुरा मदिरा मुद्रा मुद्रामुद्गरधारिणी।
सावित्री च महादेवी परप्रियविनायिका ॥ १७१ ।

यमदूती च पिङ्गाक्षी वैष्णवी शङ्करी तथा।
चन्द्रप्रिया चन्द्ररता चन्दनारण्यवासिनी ॥ १७२ ॥

चन्दनेन्द्रसमायुक्ता चण्डदैत्यविनाशिनी ।
सर्वेश्वरी यक्षिणी च किराती राक्षसी तथा ॥ १७३ ॥

महाभोगवती देवी महामोक्षप्रदायिनी ।
विश्वहन्त्री विश्वरूपा विश्वसंहारकारिणी ॥ १७४ ॥

धात्री च सर्वलोकानां हितकारणकामिनी ।
कमला सूक्ष्मदा देवी धात्री हरविनाशिनी ॥ १७५ ॥

सुरेन्द्रपूजिता सिद्धा महातेजोवतीति च ।
परारूपवती देवी त्रैलोक्याकर्षकारिणी ॥ १७६ ॥

इति ते कथितं देवि पीतानामसहस्रकम् ।
पठेद्वा पाठयेद्वापि सर्वसिद्धिर्भवेत्प्रिये ॥ १७७ ॥

मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां तर्कव्याकरणान्विताम् ॥ १७८ ॥

पीताम्बरपरीधाना पीतगन्धानुलेपना ।
परमोदयकीर्त्तिः स्यात्पुरतस्सुरसुन्दरि ॥ १७९ ॥

॥ इति श्रीउत्कटशम्बरे नागेन्द्रप्रयाणतन्त्रे षोडशसहस्रे विष्णुशङ्करसंवादे बगलामुखी (पीताम्बरी) सहस्रनामस्तोत्रं समाप्तम् ॥

# श्रीमातङ्गीध्यानम्

तालीदलेनार्पितकर्णभूषां
माध्वीमदोद्धूर्णितनेत्रपद्माम्।
घनस्तनीं शंभुवधूं नमामि
तडिल्लताकान्तिमनर्घ्यभूषाम्॥ १

घनश्यामलाङ्गीं स्थितां रत्नपीठे
शुकस्योदितं शृण्वतीं रक्तवस्त्राम्।
सुरापानमत्तां सरोजस्थितां श्रीं
भजे वल्लकीं वादयन्तीं मतङ्गीम्॥ २

माणिक्याभरणान्वितां स्मितमुखीं नीलोत्पलाभां वरां
रम्यालक्तक लिप्तपाद कमलां नेत्रत्रयोल्लासिनीम्।
वीणावादनतत्परां सुरनुतां कीरच्छदश्यामलां
मातङ्गीं शशिशेखरामनुभजे तांबूलपूर्णाननाम्॥ ३

श्यामाङ्गीं शशिशेखरां त्रिनयनां वेदैः करैर्बिभ्रतीं
पाशं खेटं अथाङ्कुशं दृढमसिं नाशाय भक्तद्विषाम्।
रत्नालङ्करणप्रभोज्ज्वलतनुं भास्वत्किरीटां शुभां
मातङ्गीं मनसा स्मरामि सदयां सर्वार्थसिद्धिप्रदाम्॥ ४

देवीं षोडशवार्षिकीं शवगतां माध्वीरसाघूर्णितां
श्यामाङ्गीमरुणाम्बरां पृथुकुचां गुञ्जावलीशोभिताम्॥
हस्ताभ्यां दधतीं कपालममलं तीक्ष्णां तथा कर्त्रिकां
ध्यायेन्मानसपङ्कजे भगवतीमुच्छिष्टचाण्डालिनीम्॥ ५॥

## श्रीमातङ्गीशतनामस्तोत्रम्

श्रीभैरव्युवाच ॥

भगवञ्छ्रोतुमिच्छामि मातङ्ग्याः शतनामकम् ।
यद्गुह्यं सर्वतन्त्रेषु केनापि न प्रकाशितम् ॥ १ ॥

श्रीभैरव उवाच ॥

शृणु देवि प्रवक्ष्यामि रहस्यातिरहस्यकम् ।
नाख्येयं यत्र कुत्रापि पठनीयं परात्परम् ॥ २ ॥

यस्यैकवारपठनात्सर्वे विघ्ना उपद्रवाः ।
नश्यन्ति तत्क्षणाद्देवि वह्निना तूलराशिवत् ॥ ३ ॥

प्रसन्ना जायते देवी मातङ्गी चास्य पाठतः ।
सहस्रनामपठने यत्फलं परिकीर्त्तितम् ।
तत्कोटिगुणितं देवीनामाष्टशतकं शुभम् ॥ ४ ॥

अस्य श्रीमातंगीशतनामस्तोत्रस्य, भगवान्मतङ्ग ऋषिः, अनुष्टुप्छन्दः, मातंगी देवता, मातंगीप्रीतये जपे विनियोगः ॥

महामत्तमातंगिनीसिद्धिरूपा तथा योगिनी भद्रकाली रमा च ।
भवानी भवप्रीतिदा भूतियुक्ता भवाराधिता भूतिसम्पत्करी च ॥ १ ॥

धनाधीशमाता धनागारदृष्टिर्धनेशार्चिता धीरवापीवरांगी ।
प्रकृष्टप्रभारूपिणी कामरूपप्रहृष्टा महाकीर्त्तिदा कर्णनाली ॥ २ ॥

करालीभगाघोररूपा भगाङ्गी भगाह्वा भगप्रीतिदा भीमरूपा ।
भवानी महाकौशिकी कोशपूर्णा किशोरीकिशोरप्रियानन्दईहा ॥ ३ ॥

महाकारणाकारणा कर्मशीला कपालिप्रसिद्धा महासिद्धखण्डा ।
मकारप्रिया मानरूपा महेशी महोल्लासिनीलास्यलीलालयाङ्गी ॥ ४ ॥

क्षमाक्षेमशीला क्षपाकारिणी चाक्षयप्रीतिदा भूतियुक्ता भवानी।
भवाराधिता भूतिसत्यात्मिका च प्रभोद्भासिता भानुभास्वत्करा च ॥ ५ ॥

धराधीशमाता धरागारदृष्टिर्धरेशार्चिता धीवराधीवरांगी।
प्रकृष्टप्रभारूपिणी प्राणरूपप्रकृष्टस्वरूपा स्वरूपप्रिया च ॥ ६ ॥

चलत्कुण्डलाकामिनी कान्तयुक्ता कपालाचला कालकोद्धारिणी च।
कदम्बप्रिया कोटरीकोटदेहा क्रमा कीर्त्तिदा कर्णरूपा च काक्ष्मीः ॥ ७ ॥

क्षमांगी क्षयप्रेमरूपा क्षपा च क्षयाक्षा क्षयाह्वा क्षयप्रान्तरा च।
क्षवत्कामिनी क्षारिणीक्षीरपूर्णा शिवांगी च शाकम्भरीशाकदेहा ॥ ८ ॥

महाशाकयज्ञा फलप्राशका च शकाह्वा शकाह्वाशकाख्या शका च।
शकाक्षान्तरोषा सुरोषा सुरेखा महाशेषयज्ञोपवीतप्रिया च ॥ ९ ॥

जयन्ती जया जाग्रतीयोग्यरूपा जयाङ्गा जपध्यानसन्तुष्टसंज्ञा।
जयप्राणरूपा जयस्वर्णदेहा जयज्वालिनीयामिनी याम्यरूपा ॥ १० ॥

जगन्मातृरूपा जगद्रक्षणा च स्वधावौषडन्ता विलम्बाविलम्बा।
षडङ्गा महालम्बरूपासिहस्ता पदाहारिणीहारिणी हारिणी च ॥ ११ ॥

महामङ्गला मङ्गलप्रेमकीर्तिर्निशुंभच्छिदा शुम्भदर्पत्वहा च।
तथाऽऽनन्दबीजादिमुक्तस्वरूपा तथा चण्डमुण्डापदामुख्यचण्डा ॥ १२ ॥

प्रचण्डाप्रचण्डा महाचण्डवेगा चलच्चामरा चामराचन्द्रकीर्तिः।
सुचामीकराचित्रभूषोज्ज्वलाङ्गी सुसङ्गीतगीता च पायादपायात् ॥ १३ ॥

इति ते कथितं देवि नाम्नामष्टोत्तरं शतम्।
गोप्यञ्च सर्वतन्त्रेषु गोपनीयञ्च सर्वदा ॥ १४ ॥

एतस्य सतताभ्यासात्साक्षाद्देवो महेश्वरः।
त्रिसन्ध्यञ्च महाभक्त्या पठनीयं सुखोदयम् ॥ १५ ॥

न तस्य दुष्करं किञ्चिज्जायते स्पर्शतः क्षणात् ।
स्वकृतं यत्तदेवाप्तं तस्मादावर्त्तयेत्सदा ॥ १६ ॥

सदैव सन्निधौ तस्य देवी वसति सादरम् ।
अयोगा ये तवैवाग्रे सुयोगाश्च भवन्ति वै ॥ १७ ॥

त एव मित्रभूताश्च भवंति तत्प्रसादतः ।
विषाणि नोपसर्पन्ति व्याधयो न स्पृशन्ति तान् ॥ १८ ॥

लूताविस्फोटकास्सर्वे शमं यांति च तत्क्षणात् ।
जरापलितनिर्मुक्तः कल्पजीवी भवेन्नरः ॥ १९ ॥

अपि किं बहुनोक्तेन सान्निध्यं फलमाप्नुयात् ।
यावन्मया पुरा प्रोक्तं फलं साहस्रनामकम् ।
तत्सर्वं लभते मर्त्यो महामायाप्रसादतः ॥ २० ॥

इति श्रीरुद्रयामले मातङ्गीशतनामस्तोत्रं सम्पूर्णम् ॥

## श्रीमातङ्गीसहस्रनामस्तोत्रम् ।

ईश्वर उवाच ॥

शृणु देवि प्रवक्ष्यामि साम्प्रतं तत्त्वतः परम् ।
नाम्नां सहस्रं परमं सुमुख्याः सिद्धये हितम् ॥ १ ॥

सहस्रनामपाठी यः सर्वत्र विजयी भवेत् ।
पराभवो न तस्यास्ति सभायां वा महारणे ॥ २ ॥

यथा तुष्टा भवेद्देवी सुमुखी चास्य पाठतः ।
तथा भवति देवेशि साधकः शिव एव सः ॥ ३ ॥

अश्वमेधसहस्राणि वाजपेयस्य कोटयः ।
सकृत्पाठेन जायन्ते प्रसन्ना सुमुखी भवेत् ॥ ४ ॥

मतङ्गोऽस्य ऋषिश्छन्दोऽनुष्टुब्देवी समीरिता।
सुमुखी विनियोगः स्यात्सर्वसम्पत्तिहेतवे।
एवं ध्यात्वा पठेदेतद्यदीच्छेत् सिद्धिमात्मनः॥ ५॥

ॐ सुमुखी शेमुषी सेव्या सुरसा शशिशेखरा।
समानास्या साधनी च समस्तसुरसन्मुखी॥ ६॥

सर्वसम्पत्तिजननी संपदा सिन्धुसेविनी।
शम्भुसीमन्तिनी सौम्या समाराध्या सुधारसा॥ ७॥

सारङ्गा सवली वेला लावण्यवनमालिनी।
वनजाक्षी वनचरी वनी वनविनोदिनी॥ ८॥

वेगिनी वेगदा वेगा बगलस्था बलाधिका।
काली कालप्रिया केली कमला कालकामिनी॥ ९॥

कमला कमलस्था च कमलस्था कलावती।
कुलीना कुटिला कान्ता कोकिला कलभाषिणी॥ १०॥

कीरा केलिकरा काली कपालिन्यपि कालिका।
केशिनी च कुशावर्त्ता कौशाम्भी केशवप्रिया॥ ११॥

काली काशी महाकालसङ्काशा केशदायिनी।
कुण्डला च कुलस्था च कुण्डलाङ्गदमण्डिता॥ १२॥

कुण्डपद्मा कुमुदिनी कुमुद्प्रीतिवर्धिनी।
कुण्डप्रिया कुण्डरुचिः कुरङ्गनयना कुला॥ १३॥

कुन्दबिम्बालिनदिनी कुसुम्भकुसुमाकरा।
काञ्ची कनकशोभाढ्या क्वणत्किङ्किणिकाकटिः॥ १४॥

कठोरकरणा काष्ठा कौमुदी कण्ठवत्यपि ।
कपर्दिनी कपटिनी कठिनी कलकण्ठिनी ॥ १५ ॥

कीरहस्ता कुमारी च कुरूढकुसुमप्रिया ।
कुञ्जरस्था कुञ्जरता कुम्भी कुम्भस्तनी कला ॥ १६ ॥

कुम्भीकाङ्क्षा करभोरूः कदलीकुशशायिनी ।
कुपिता कोटरस्था च कङ्काली कन्दलालया ॥ १७ ॥

कपालवसिनी केशी कम्पमानशिरोरुहा ।
कादम्बरी कदम्बस्था कुङ्कुमप्रेमधारिणी ॥ १८ ॥

कुटुम्बिनी कृपायुक्ता क्रतुः क्रतुकरप्रिया ।
कात्यायनी कृत्तिका च कार्त्तिकी कुशवर्तिनी ॥ १९ ॥

कामपत्नी कामदात्री कामेशी कामवन्दिता ।
कामरूपा कामरतिः कामाख्या ज्ञानमोहिनी ॥ २० ॥

खड्गिनी खेचरी खञ्जा खञ्जरीटेक्षणा खगा ।
खरगा खरनादा च खरस्था खेलनप्रिया ॥ २१ ॥

खरांशुः खेलनी खट्वा खरा खट्वाङ्गधारिणी ।
खरखण्डिन्यपि ख्यातिः खण्डिता खण्डनप्रिया ॥ २२ ॥

खण्डप्रिया खण्डखाद्या खण्डसिन्धुश्च खण्डिनी ।
गङ्गा गोदावरी गौरी गोतम्यपि च गौतमी ॥ २३ ॥

गङ्गा गया गगनगा गारुडी गरुडध्वजा ।
गीता गीतप्रिया गेया गुणप्रीतिर्गुरुर्गिरिः ॥ २४ ॥

गौर्गौरी गण्डसदना गोकुला गोप्रतारिणी ।
गोप्त्री गोविन्दिनी गूढा गूढविग्रस्तगुञ्जिनी ॥ २५ ॥

गजगा गोपिनी गोपी गोक्षा जयप्रिया गणा ।
गिरिभूपालदुहिता गोगा गोकुलवासिनी ॥ २६ ॥

घनस्तनी घनरुचिर्घनोरुर्घननिस्वना ।
घुङ्कारिणी घुक्षकरी घूघूकपरिवारिता ॥ २७ ॥

घण्टानादप्रिया घण्टा घोटा घोटकवाहिनी ।
घोररूपा च घोरा च घृतप्रीतिर्घृताञ्जनी ॥ २८ ॥

घृताची घृतवृष्टिश्च घण्टा घटघटावृता ।
घटस्था घटना घातकरी घातनिवारिणी ॥ २९ ॥

चञ्चरीकी चकोरी च चामुण्डा चीरधारिणी ।
चातुरी चपला चञ्चुश्चिता चिन्तामणिस्थिता ॥ ३० ॥

चातुर्वर्ण्यमयी चञ्चुश्चोराचार्य्या चमत्कृतिः ।
चक्रवर्तिवधूश्चित्रा चक्राङ्गी चक्रमोदिनी ॥ ३१ ॥

चेतश्चरी चित्तवृत्तिश्चेतना चेतनप्रिया ।
चापिनी चम्पकप्रीतिश्चण्डा चण्डालवासिनी ॥ ३२ ॥

चिरञ्जीविनी तच्चिन्तात्ता चिञ्चामूलनिवासिनी ।
छुरिका छत्रमध्यस्था छिन्दा छिन्दाकरी छिदा ॥ ३३ ॥

छुच्छुन्दरी छलप्रीतिश्छुच्छुन्दरनिभस्वना ।
छलिनी छत्रदा छिन्ना छिण्टिच्छेदकरी छटा ॥ ३४ ॥

छद्मिनी छान्दसी छाया छरू छन्दाकरीत्यपि ।
जयदा जयदा जाती जायिनी जामला जतुः ॥ ३५ ॥

जम्बूप्रिया जीवनस्था जङ्गमा जङ्गमप्रिया ।
जपापुष्पप्रिया जप्या जगज्जीवा जगज्जनिः ॥ ३६ ॥

जगज्जन्तुप्रधाना च जगज्जीवपरा जपा।
जातिप्रिया जीवनस्था जीमूतसदृशीरुचिः ॥ ३७ ॥

जन्या जनहिता जाया जन्मभूर्जम्भसी जभूः।
जयदा जगदावासा जायिनी ज्वरकृच्छ्र जित्॥ ३८ ॥

जपा च जपती जप्या जपार्हा जायिनी जना।
जालन्धरमयीजानुर्जलौका जाप्यभूषणा॥ ३९ ॥

जगज्जीवमयी जीवा जरत्कारुर्जनप्रिया।
जगती जननिरता जगच्छोभाकरी जवा॥ ४० ॥

जगर्तीत्राणकृज्जङ्घा जातीफलविनोदिनी।
जातीपुष्पप्रिया ज्वाला ज़ातिहा जातिरूपिणी॥ ४१ ॥

जीमूतवाहनरुचिर्जीमूता जीर्णवस्त्रकृत्।
जीर्णवस्त्रधरा जीर्णा ज्वलती जालनाशिनी॥ ४२ ॥

जगत्क्षोभकरी जातिर्जगत्क्षोभविनाशिनी।
जनापवादा जीवा च जननीगृहवासिनी॥ ४३ ॥

जनानुरागा जानुस्था जलवासा जलार्तिकृत्।
जलजा जलवेला च जलचक्रनिवासिनी॥ ४४ ॥

जलमुक्ता जलारोहा जलजा जलजेक्षणा।
जलप्रिया जलौका च जलशोभावती तथा॥ ४५ ॥

जलविस्फूर्जितवपुर्ज्वलत्पावकशोभिनी।
झिञ्झा झिल्लमयी झिञ्झा झणत्कारकरी जया॥ ४६ ॥

झञ्झी झम्पकरी झम्पा झम्पत्रासनिवारिणी।
टङ्कारस्था टङ्ककरी टङ्कारकरणांहसा॥ ४७ ॥

टङ्कारोट्टकृतष्ठीवा डिण्डीरवसनावृता।
डाकिनी डामिरी चैव डिण्डिमध्वनिनादिनी॥ ४८॥

डकारनिस्वनरुचिस्तपिनी तापिनी तथा।
तरुणी तुन्दिला तुन्दा तामसी च तमःप्रिया॥ ४९॥

ताम्रा ताम्रवती तन्तुस्तुन्दिला तुलसम्भवा।
तुलाकोटिसुवेगा च तुल्यकामा तुलाश्रया॥ ५०॥

तुदिनी तुनिनी तुम्बा तुल्यकाला तुलाश्रया।
तुमुला तुलजा तुल्या तुलादानकरी तथा॥ ५१॥

तुल्यवेगा तुल्यगतिस्तुलाकोटिनिनादिनी।
ताम्रोष्ठा ताम्रपर्णी च तमःसङ्क्षोभकारिणी॥ ५२॥

त्वरिता त्वरहा तीरा तारकेशी तमालिनी।
तमोदानवती ताम्रतालस्थानवती तमी॥ ५३॥

तामसी च तमिस्रा च तीव्रा तीव्रपराक्रमा।
तटस्था तिलतैलाक्ता तरुणी तपनद्युतिः॥ ५४॥

तिलोत्तमा च तिलकृत्तारकाधीशशेखरा।
तिलपुष्पप्रिया तारा तारकेशकुटुम्बिनी॥ ५५॥

स्थाणुपत्नी स्थिरकरी स्थूलसम्पद्विवर्धिनी।
स्थितिः स्थैर्यस्थविष्ठा च स्थपतिः स्थूलविग्रहा॥ ५६॥

स्थूलस्थलवती स्थाली स्थलसङ्गविवर्धिनी।
दण्डिनी दन्तिनी दामा दरिद्रा दीनवत्सला॥ ५७॥

देवा देववधूर्दित्या दामिनी देवभूषणा।
दया दमवती दीनवत्सला दाडिमस्तनी॥ ५८॥

देवमूर्तिकरा दैत्या दारिणी देवतानता ।
दोलाक्रीडा दयालुश्च दम्पती देवतामयी ॥ ५९ ॥

दशादीपस्थिता दोषादोषहा दोषकारिणी ।
दुर्गा दुर्गार्तिशमनी दुर्गम्या दुर्गवासिनी ॥ ६० ॥

दुर्गन्धनाशिनी दुस्स्था दुःखप्रशमकारिणी ।
दुर्गन्धा दुन्दुभीध्वान्ता दूरस्था दूरवासिनी ॥ ६१ ॥

दरदा दरदात्री च दुर्व्याधदयिता दमी ।
धुरन्धरा धुरीणा च धौरेयी धनदायिनी ॥ ६२ ॥

धीरारवा धरित्री च धर्मदा धीरमानसा ।
धनुर्धरा च धमनी धमनीधूर्तविग्रहा ॥ ६३ ॥

धूम्रवर्णा धूम्रपाना धूमला धूममोदिनी ।
नन्दिनी नन्दिनीनन्दा नन्दिनीनन्दबालिका ॥ ६४ ॥

नवीना नर्मदा नर्मनेमिर्नियमनिस्वना ।
निर्मला निगमाधारा निम्नगा नग्नकामिनी ॥ ६५ ॥

नीला निरत्ना निर्वाणा निर्लोभा निर्गुणा नतिः ।
नीलग्रीवा निरीहा च निरञ्जनजना नवा ॥ ६६ ॥

निर्गुण्डिका च निर्गुण्डा निर्नासा नासिकाभिधा ।
पताकिनी पताका च पत्रप्रीतिः पयस्विनी ॥ ६७ ॥

पीना पीनस्तनी पत्नी पवनाशी निशामयी ।
परा परपरा काली पारकृत्यभुजप्रिया ॥ ६८ ॥

पवनस्था च पवना पवनप्रीतिवर्धिनी ।
पशुवृद्धिकरी पुष्पपोषका पुष्टिवर्धिनी ॥ ६९ ॥

पुष्पिणी पुस्तककरा पूर्णिमातलवासिनी ।
पेशी पाशकरी पाशा पांशुहा पांशुला पशुः ॥ ७० ॥

पटुः पराशा परशुधारिणी पाशिनी तथा ।
पापघ्नी पतिपत्नी च पतिता पतितापिनी ॥ ७१ ॥

पिशाची च पिशाचघ्नी पिशिताशनतोषिणी ।
पानदा पानपात्री च पानदानकरोद्यता ॥ ७२ ॥

पेया प्रसिद्धा पीयूषा पूर्णा पूर्णमनोरथा ।
पतङ्गाभा पतङ्गा च पौनःपुन्यपिबापरा ॥ ७३ ॥

पङ्किला पङ्कमग्ना च पानीया पञ्जरस्थिता ।
पञ्चमी पञ्चयज्ञा च पञ्चता पञ्चमप्रिया ॥ ७४ ॥

पिचुमन्दा पुण्डरीका पिकी पिङ्गललोचना ।
प्रियङ्गुमञ्जरी पिण्डी पण्डिता पाण्डुरप्रभा ॥ ७५ ॥

प्रेतासना प्रियालस्था पाण्डुघ्नी पीनसापहा ।
फलिनी फलदात्री च फलश्रीः फलभूषणा ॥ ७६ ॥

फूत्कारकारिणी स्फारी फुल्ला फुल्लाम्बुजानना ।
स्फुलिंगहा स्फीतमतिः स्फीतकीर्त्तिकरी तथा ॥ ७७ ॥

बालमाया बलारातिर्बलिनी बलवर्धिनी ।
वेणुवाद्या वनचरी विरिञ्चिजनयित्र्यपि ॥ ७८ ॥

विद्याप्रदा महाविद्या बोधिनी बोधदायिनी ।
बुद्धमाता च बुद्धा च वनमालावती वरा ॥ ७९ ॥

वरदा वारुणी वीणा वीणावादनतत्परा ।
विनोदिनी विनोदस्था वैष्णवी विष्णुवल्लभा ॥ ८० ॥

वैद्या वैद्यचिकित्सा च विवशा विश्वविश्रुता।
विद्यौघविह्वला वेला वित्तदा विगतज्वरा॥ ८१ ॥

विरावा विवरीकारा बिम्बोष्ठी बिम्बवत्सला।
विन्ध्यस्था वरवन्द्या च वीरस्थानवरा च वित्॥ ८२ ॥

वेदान्तवेद्या विजया विजयाविजयप्रदा।
विरोगी वन्दिनी वन्ध्या वन्द्या बन्धनिवारिणी॥ ८३ ॥

भगिनी भगमाला च भवानी भवनाशिनी।
भीमा भीमानना भीमाभङ्गुरा भीमदर्शना॥ ८४ ॥

भिल्ली भिल्लधरा भीरुर्भेरुण्डा भीर्भयावहा।
भगसर्पिण्यपि भगा भगरूपा भगालया॥ ८५ ॥

भगासना भवाभोगा भेरीझङ्काररञ्जिता।
भीषणा भीषणारावा भगवत्यहिभूषणा॥ ८६ ॥

भारद्वाजा भोगदात्री भूतिघ्नी भूतिभूषणा।
भूमिदा भूमिदात्री च भूपतिर्भरदायिनी॥ ८७ ॥

भ्रमरी भ्रामरी भाला भूपालकुलसंस्थिता।
माता मनोहरी माया मानिनी मोहिनी मही॥ ८८ ॥

महालक्ष्मीर्मदक्षीबा मदिरा मदिरालया।
मदोद्धता मतङ्गस्था माधवी मधुमर्दिनी॥ ८९ ॥

मोदा मोदकरी मेधा मेध्या मध्याधिपस्थिता।
मद्यपा मांसलोभस्था मोदिनी मैथुनोद्यता॥ ९० ॥

मूर्धावती महामाया माया महिममन्दिरा।
महामाला महाविद्या महामारी महेश्वरी॥ ९१ ॥

महादेववधूर्मान्या मथुरा मेरुमण्डिता ।
मेदस्विनी मिलिन्दाक्षी महिषासुरमर्दिनी ॥ ९२ ॥

मण्डलस्था भगस्था च मदिरारागगर्विता ।
मोक्षदा मुण्डमाला च माला मालाविलासिनी ॥ ९३ ॥

मातङ्गिनी च मातङ्गी मातङ्गतनयापि च ।
मधुस्रवा मधुरसा बन्धूककुसुमप्रिया ॥ ९४ ॥

यामिनी यामिनीनाथभूषा यावकरञ्जिता ।
यवाङ्कुरप्रिया यामा यवनी यवनार्दिनी ॥ ९५ ॥

यमघ्नी यमकल्पा च यजमानस्वरूपिणी ।
यज्ञा यज्ञयजुर्यक्षी यशोनिष्कम्पकारिणी ॥ ९६ ॥

यक्षिणी यक्षजननी यशोदा यासधारिणी ।
यशस्सूत्रप्रदा यामा यज्ञकर्मकरीत्यपि ॥ ९७ ॥

यशस्विनी यकारस्था यूपस्तम्भनिवासिनी ।
रञ्जिता राजपत्नी च रमा रेखा रवी रणा ॥ ९८ ॥

रजोवती रजश्चित्रा रञ्जनी रजनीपतिः ।
रोगिणी रजनी राज्ञी राज्यदा राज्यवर्धिनी ॥ ९९ ॥

राजन्वती राजनीतिस्तथा रजतवासिनी ।
रमणी रमणीया च रामा रामावती रतिः ॥ १०० ॥

रेतोरती रतोत्साहा रोगघ्नी रोगकारिणी ।
रङ्गा रङ्गवती रागा रागज्ञा रागकृद्दया ॥ १०१ ॥

रामिका रजकी रेवा रजनी रङ्गलोचना ।
रक्तचर्मधरा रङ्गी रङ्गस्था रङ्गवाहिनी ॥ १०२ ॥

रमा रम्भाफलप्रीती रम्भोरू राघवप्रिया ।
रङ्गा रङ्गाङ्गमधुरा रोदसी च महारवा ॥ १०३ ॥

रोधकृद्रोगहन्त्री च रूपभृद्रोगस्राविणी ।
बन्दी वन्दिस्तुता बन्धुर्बन्धूककुसुमाधरा ॥ १०४ ॥

वन्दिता वन्द्यमाना च वैद्रावी वेदविद्विधा ।
विकोपा विकपाला च विङ्कस्था विङ्कवत्सला ॥ १०५ ॥

वेदिर्वलग्नलग्ना च विधिविङ्ककरीविधा ।
शङ्खिनी शङ्खवलया शङ्खमालावती शमी ॥ १०६ ॥

शङ्खपात्राशिनी शङ्खस्वना शङ्खगला शशी ।
शबरी शम्बरी शम्भुः शम्भुकेशा शरासिनी ॥ १०७ ॥

शवा श्येनवती श्यामा श्यामाङ्गी श्यामलोचना ।
श्मशानस्था श्मशाना च श्मशानस्थानभूषणा ॥ १०८ ॥

शमदा शमहन्त्री च शङ्खिनी शङ्खरोषणा ।
शान्तिश्शान्तिप्रदा शेषाशेषाख्या शेषशायिनी ॥ १०९ ॥

शेमुषी शोषिणी शेषा शौर्या शौर्यशरा शरी ।
शापदा शापहा शापा शापपन्थास्सदाशिवा ॥ ११० ॥

शृङ्गिणी शृङ्गिपलभुक् शङ्करी शाङ्करी शिवा ।
शवस्था शवभुक् शान्ता शवकर्णा शवोदरी ॥ १११ ॥

शाविनी शवशिंशा श्रीः शवा च शमशायिनी ।
शवकुण्डलिनी शैवा शीकरा शिशिराशिनी ॥ ११२ ॥

शवकाञ्ची शवश्रीका शवमाला शवाकृतिः ।
स्रवन्ती सङ्कुचा शक्तिश्शन्तनुश्शवदायिनी ॥ ११३ ॥

सिन्धुस्सरस्वती सिन्धुसुन्दरी सुन्दरानना ।
साधुः सिद्धिप्रदात्री च सिद्धा सिद्धसरस्वती ॥ ११४ ॥

सन्ततिस्सम्पदा संविच्छङ्किसम्पत्तिदायिनी ।
सपत्नी सरसा सारा सारस्वतकरी सुधा ॥ ११५ ॥

सुरासमांसाशना च समाराध्या समस्तदा ।
समधीस्सामदा सीमा सम्मोहा समदर्शना ॥ ११६ ॥

सामतिस्सामधा सीमा सावित्री सविधा सती ।
सवना सवनासारा सवरा सावरा समी ॥ ११७ ॥

सिमरा सतता साध्वी सध्रीची ससहायिनी ।
हंसी हंसगतिर्हंसी हंसोज्ज्वलनिचोलयुक् ॥ ११८ ॥

हलिनी हालिनी हाला हलश्रीर्हरवल्लभा ।
हला हलवती हेषा हेला हर्षविवर्धिनी ॥ ११९ ॥

हन्तिर्हन्ता हया हाहाहिताहन्तातिकारिणी ।
हङ्कारी हंकृतिर्हङ्का हीहीहाहाहिता हिता ॥ १२० ॥

हीतिर्हेमप्रदा हाराराविणी हरिसम्मता ।
होरा होत्री होलिका च होमा होमहविर्हविः ॥ १२१ ॥

हरिणी हरिणीनेत्रा हिमाचलनिवासिनी ।
लम्बोदरी लम्बकर्णा लम्बिका लम्बविग्रहा ॥ १२२ ॥

लीला लीलावती लोला ललना ललिता लता ।
ललामलोचना लोभ्या लोलाक्षी लकुला लया ॥ १२३ ॥

लपन्ती लपती लम्पा लोपामुद्रा ललन्तिका ।
लतिका लङ्घिनी लङ्घा लालिमा लघुमध्यमा ॥ १२४ ॥

लघीयसी लघूदर्या लूता लूताविनाशिनी ।
लोमशा लोमलम्बी च लुलन्ती च लुलुम्पती ॥ १२५ ॥

लुलायस्था च लहरी लङ्कापुरपुरन्दरा ।
लक्ष्मीर्लक्ष्मीप्रदा लभ्या लाक्षाक्षी लुलितप्रभा ॥ १२६ ॥

क्षणा क्षणक्षुत् क्षुत्क्षीणा क्षमा क्षान्तिः क्षमावती ।
क्षामा क्षामोदरी क्षेम्या क्षौमभृत्क्षत्रियाङ्गना ॥ १२७ ॥

क्षया क्षयकरी क्षीरा क्षीरदा क्षीरसागरा ।
क्षेमङ्करी क्षयकरी क्षयकृत्क्षणदा क्षतिः ॥ १२८ ॥

क्षुद्रिका क्षुद्रिकाक्षुद्रा क्षुत्क्षमा क्षीणपातका ।
मातुः सहस्रनामेदं सुमुख्यास्सिद्धिदायकम् ॥ १२९ ॥

यः पठेत्प्रयतो नित्यं स एव स्यान्महेश्वरः ।
अनाचारात्पठेन्नित्यं दरिद्रो धनवान्भवेत् ॥ १३० ॥

मूकस्स्याद्वाक्पतिर्देवि रोगी नीरोगतां व्रजेत् ।
पुत्रार्थी पुत्रमाप्नोति त्रिषु लोकेषु विश्रुतम् ॥ १३१ ॥

वन्ध्यापि सूयते पुत्रं विदुषस्सदृशं गुरोः ।
सत्यश्च बहुधा भूयाद्गावश्च बहुदुग्धदाः ॥ १३२ ॥

राजानः पादनम्रास्स्युस्तस्य हासा इव स्फुटाः ।
अरयस्सङ्क्षयं यांति मनसा संस्मृता अपि ॥ १३३ ॥

दर्शनादेव जायन्ते नरा नार्योऽपि तद्वशाः ।
कर्ता हर्ता स्वयं वीरो जायते नात्र संशयः ॥ १३४ ॥

यं यं कामयते कामं तं तमाप्नोति निश्चितम् ।
दुरितं न च तस्यास्ति नास्ति शोकः कथञ्चन ॥ १३५ ॥

चतुष्पथेऽर्धरात्रे च यः पठेत्साधकोत्तमः।
एकाकी निर्भयो वीरो दशावर्तं स्तवोत्तमम्॥
मनसा चिन्तितं कार्यं तस्य सिद्धिर्न संशयः॥ १३६॥

वन्दे श्रीसुमुखीं प्रसन्नवदनां पूर्णेन्दुबिम्बाननां
सिन्दूराङ्कितमस्तकां मधुमदोल्लोलाश्च मुक्तावलीम्।
श्यामां कज्जलिकाकरां करगतं चाध्यापयन्तीं शुकं
गुञ्जापुञ्जविभूषणां सकरुणामामुक्तवेणीलताम्॥ १३७॥

इति श्रीनन्द्यावर्ततन्त्रे उत्तरखण्डे मातङ्गीसहस्रनामस्तोत्रं संपूर्णम्॥

# श्री कमला (कमलात्मिका) ध्यानम्

कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
हस्तोत्क्षिप्त हिरण्मयामृतघटैरासिच्यमानां श्रियम्।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्धनितंबबिम्बललितां वन्देऽरविन्दस्थिताम्॥

माणिक्यप्रतिमप्रभां हिमनिभैस्तुंगैश्चतुर्भिर्गजैः
हस्ताग्राहितरत्नकुंभसलिलैरासिच्यमानां मुदा।
हस्ताब्जैर्वरदानमंबुजयुगाभीतीर्दधानां हरेः
कान्तां कांक्षितपारिजातलतिकां वन्दे सरोजासनाम्॥

आसीना सरसीरुहे स्मितमुखी हस्तांबुजैर्बिभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा।
मुक्ताहार विराजमान पृथुलोत्तुङ्ग स्तनोद्भासिनी
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम्॥

सिन्दूरारुणकान्तिमब्जवसतिं सौन्दर्यवारांनिधिं
कोटीराङ्गदहारकुण्डलकटी सूत्रादिभिर्भूषिताम्।
हस्ताब्जैर्वसुपत्रमब्जयुगलादर्शौ वहन्तीं परां
आवीतां परिचारिकाभिरनिशं सेवे प्रियां शार्ङ्गिणः॥

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारोज्ज्वलां
रत्नाकल्पविभूषितां कुचनतां शालेः करैर्मञ्जरीम्।
पद्मं कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां
फुल्लांभोजविलोचनत्रययुतां वन्दे परां देवताम्॥

# श्रीकमला-अष्टोत्तरशतनामस्तोत्रम्

श्रीशिव उवाच ॥

शतमष्टोत्तरं नाम्नां कमलाया वरानने ।
प्रवक्ष्याम्यतिगुह्यं हि न कदापि प्रकाशयेत् ॥ १ ॥

महामाया महालक्ष्मीर्महावाणी महेश्वरी ।
महादेवी महारात्रिर्महिषासुरमर्दिनी ॥ २ ॥

कालरात्रिः कुहूः पूर्णा नन्दाऽऽद्या भद्रिका निशा ।
जया रिक्ता महाशक्तिर्देवमाता कृशोदरी ॥ ३ ॥

शचीन्द्राणी शक्रनुता शङ्करप्रियवल्लभा ।
महावराहजननी मदनोन्मथिनी मही ॥ ४ ॥

वैकुण्ठनाथरमणी विष्णुवक्षःस्थलस्थिता ।
विश्वेश्वरी विश्वमाता वरदाऽभयदा शिवा ॥ ५ ॥

शूलिनी चक्रिणी मा च पाशिनी शंखधारिणी ।
गदिनी मुंडमाला च कमला करुणालया ॥ ६ ॥

पद्माक्षधारिणी ह्यम्बा महाविष्णुप्रियङ्करी ।
गोलोकनाथरमणी गोलोकेश्वरपूजिता ॥ ७ ॥

गया गङ्गा च यमुना गोमती गरुडासना ।
गण्डकी सरयूस्तापी रेवा चैव पयस्विनी ॥ ८ ॥

नर्मदा चैव कावेरी केदारस्थलवासिनी ।
किशोरी केशवनुता महेन्द्रपरिवन्दिता ॥ ९ ॥

ब्रह्मादिदेवनिर्माणकारिणी वेदपूजिता ।
कोटिब्रह्माण्डमध्यस्था कोटिब्रह्माण्डकारिणी ॥ १० ॥

श्रुतिरूपा श्रुतिकरी श्रुतिस्मृतिपरायणा ।
इन्दिरा सिंधुतनया मातङ्गी लोकमातृका ॥ ११ ॥

त्रिलोकजननी तंत्रा तंत्रमंत्रस्वरूपिणी ।
तरुणी च तमोहंत्री मंगला मंगलायना ॥ १२ ॥

मधुकैटभमथनी शुम्भासुरविनाशिनी ।
निशुम्भादिहरा माता हरिशङ्करपूजिता ॥ १३ ॥

सर्वदेवमयी सर्वा शरणागतपालिनी ।
शरण्या शम्भुवनिता सिंधुतीरनिवासिनी ॥ १४ ॥

गंधर्वगानरसिका गीता गोविन्दवल्लभा ।
त्रैलोक्यपालिनी तत्त्वरूपा तारुण्यपूरिता ॥ १५ ॥

चन्द्रावली चन्द्रमुखी चन्द्रिका चन्द्रपूजिता
चन्द्रा शशाङ्कभगिनी गीतवाद्यपरायणा ॥ १६ ॥

सृष्टिरूपा सृष्टिकरी सृष्टिसंहारकारिणी ।
इति ते कथितं देवि रमानामशताष्टकम् ॥ १७ ॥

त्रिसंध्यं प्रयतो भूत्वा पठेदेतत्समाहितः ।
यं यं कामयते कामं तं तं प्राप्नोत्यसंशयम् ॥ १८ ॥

इमं स्तवं यः पठतीह मर्त्यो वैकुण्ठपत्न्याः परसादरेण ।
धनाधिपाद्यैः परिवन्दितः स्यात् प्रयास्यति श्रीपदमन्तकाले ॥ १९ ॥

# श्रीकमलासहस्रनामस्तोत्रम् ॥

ॐ तामाह्वयामि सुभगां लक्ष्मीं त्रैलोक्यपूजिताम् ॥
एह्येहि देवि पद्माक्षि पद्माकरकृतालये ॥ १ ॥

आगच्छागच्छ वरदे पश्य मां स्वेन चक्षुषा ।
आयाह्यायाहि धर्मार्थकाममोक्षमये शुभे ॥ २ ॥

एवंविधैः स्तुतिपदैः सत्यैः सत्यार्थसंस्तुता ।
कनीयसी महाभागा चन्द्रेण परमात्मना ॥ ३ ॥

निशाकरश्च सा देवी भ्रातरौ द्वौ पयोनिधेः ।
उत्पन्नमात्रौ तावास्तां शिवकेशवसंश्रितौ ॥ ४ ॥

सनत्कुमारस्तमृषिं समाभाष्य पुरातनम् ।
प्रोक्तवानितिहासं तु लक्ष्म्याः स्तोत्रमनुत्तमम् ॥ ५ ॥

अथेदृशान्महाघोराद्दारिद्र्यान्नरकात्कथम् ।
मुक्तिर्भवति लोकेऽस्मिन् दारिद्र्यं याति भस्मताम् ॥ ६ ॥

सनत्कुमार उवाच ।
पूर्वं कृतयुगे ब्रह्मा भगवान् सर्वलोककृत् ।
सृष्टिं नानाविधां कृत्वा पश्चाच्चिंतामुपेयिवान् ॥ ७ ॥

किमाहाराः प्रजास्त्वेताः सम्भविष्यन्ति भूतले ।
तथैव चासां दारिद्र्यात्कथमुत्तरणं भवेत् ॥ ८ ॥

दारिद्र्यान्मरणं श्रेयस्त्विति संचिन्त्य चेतसि ।
क्षीरोदस्योत्तरे कूले जगाम कमलोद्भवः ॥ ९ ॥

तत्र तीव्रं तपस्तप्त्वा कदाचित्परमेश्वरम् ।
ददर्श पुण्डरीकाक्षं वासुदेवं जगद्गुरुम् ॥ १० ॥

सर्वज्ञं सर्वशक्तीनां सर्वावासं सनातनम् ।
सर्वेश्वरं वासुदेवं विष्णुं लक्ष्मीपतिं प्रभुम् ॥ ११ ॥

सोमकोटिप्रतीकाशं क्षीरोदविमले जले ।
अनंतभोगशयनं विश्रांतं श्रीनिकेतनम् ॥ १२ ॥

कोटिसूर्यप्रतीकाशं महायोगेश्वरेश्वरम् ।
योगनिद्रारतं श्रीशं सर्वावासं सुरेश्वरम् ॥ १३ ॥

जगदुत्पत्तिसंहारस्थितिकारणकारणम् ।
लक्ष्म्यादिशक्तिकरण जातमण्डलमंडितम् ॥ १४ ॥

आयुधैर्देहवद्भिश्च चक्राद्यैः परिवारितम् ।
दुर्निरीक्ष्यं सुरैः सिद्धैर्महायोनिशतैरपि ॥ १५ ॥

आधारं सर्वशक्तीनां परं तेजः सुदुस्सहम् ।
प्रबुद्धं देवमीशानं दृष्ट्वा कमलसम्भवः ॥ १६ ॥

शिरस्यंजलिमाधाय स्तोत्रं पूर्वमुवाच ह ।
मनोवांछितसिद्धिं त्वं पूरयस्व महेश्वर ॥ १७ ॥

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १८ ॥

सर्वेश्वर जयानन्द सर्वावास परात्पर ।
प्रसीद मम भक्तस्य छिंधि सन्देहजं तमः ॥ १९ ॥

एवं स्तुतः स भगवान् ब्रह्मणाऽव्यक्तजन्मना ।
प्रसादाभिमुखः प्राह हरिर्विश्रांतलोचनः ॥ २० ॥

श्रीभगवानुवाच ॥

हिरण्यगर्भ तुष्टोऽस्मि ब्रूहि यत्तेऽभिवांछितम् ।
तद्वक्ष्यामि न सन्देहो भक्तोऽसि मम सुव्रत ॥ २१ ॥

केशवाद्वचनं श्रुत्वा करु॰ाविष्टचेतनः ।
प्रत्युवाच महाबुद्धिर्भगवन्॰ जनार्दनम् ॥ २२ ॥

चतुर्विधं भवस्यास्य भूतसर्गस्य केशव ।
परित्राणाय मे ब्रूहि रहस्यं परमाद्भुतम् ॥ २३ ॥

दारिद्र्यशमनं धन्यं मनोज्ञं पावनं परम् ।
सर्वेश्वर महाबुद्धे स्वरूपं भैरवं महत् ॥ २४ ॥

श्रियः सर्वातिशायिन्यास्तथा ज्ञानं च शाश्वतम् ।
नामानि चैव मुख्यानि यानि गौणानि चाच्युत ॥ २५ ॥

त्वद्वक्त्रकमलोत्थानि श्रोतुमिच्छामि तत्त्वतः ।
इति तस्य वचः श्रुत्वा प्रतिवाक्यमुवाच सः ॥ २६ ॥

श्रीभगवानुवाच ॥

महाविभूतिसंयुक्ता षाड्गुण्यवपुषः प्रभोः ।
भगवद्वासुदेवस्य नित्यं चैषाऽनपायिनी ॥ २७ ॥

एकैव वर्ततेऽभिन्ना ज्योत्स्नेव हिमदीधितेः ।
सर्वशक्त्यात्मिका चैव विश्वं व्याप्य व्यवस्थिता ॥ २८ ॥

सर्वैश्वर्यगुणोपेता नित्यशुद्धस्वरूपिणी ।
प्राणशक्तिः परा ह्येषा सर्वेषां प्राणिनां भुवि ॥ २९ ॥

शक्तीनां चैव सर्वासां योनिभूता परा कला ।
अहं तस्याः परं नाम्नां सहस्रमिदमुत्तमम् ॥ ३० ॥

शृणुष्वावहितो भूत्वा परमैश्वर्यभूतिदम् ।
देव्याख्यास्मृतिमात्रेण दारिद्र्यं याति भस्मताम् ॥ ३१ ॥

ओं श्रीः पद्मा प्रकृतिः सत्त्वा शांता चिच्छक्तिरव्यया ।
केवला निष्कला शुद्धा व्यापिनी व्योमविग्रहा ॥ ३२ ॥

व्योमपद्मकृताधारा परं व्योम मतोद्भवा ।
निर्व्योमा व्योममध्यस्था पञ्चव्योमपदाश्रिता ॥ ३३ ॥

अच्युता व्योमनिलया परमानन्दरूपिणी ।
नित्यशुद्धा नित्यतृप्ता निर्विकारा निरीक्षणा ॥ ३४ ॥

ज्ञानशक्तिः कर्तृशक्तिर्भोक्तृशक्तिः शिखावहा ।
स्नेहाभासा निरानन्दा विभूतिर्विमला चला ॥ ३५ ॥

अनंता वैष्णवी व्यक्ता विश्वानन्दा विकाशिनी ।
शक्तिर्विभिन्नसर्वार्तिः समुद्रपरितोषिणी ॥ ३६ ॥

मूर्तिः सनातनी हार्दी निस्तरङ्गा निरामया ।
ज्ञानज्ञेया ज्ञानगम्या ज्ञानज्ञेयविकासिनी ॥ ३७ ॥

स्वच्छन्दशक्तिर्गहना निष्कंपार्चिः सुनिर्मला ।
स्वरूपा सर्वगाऽपारा बृंहिणी सुगुणोर्जिता ॥ ३८ ॥

अकलङ्का निराधारा निस्सङ्कल्पा निराश्रया ।
असङ्कीर्णा सुशांता च शाश्वती भासुरी स्थिरा ॥ ३९ ॥

अनौपम्या निर्विकल्पा निर्यंत्रा यंत्रवाहिनी ।
अभेद्या भेदिनी भिन्ना भारती वैखरी खगा ॥ ४० ॥

अग्राह्या ग्राहिका गूढा गम्भीरा विश्वगोपिनी ।
अनिर्देश्याऽप्रतिहता निर्बीजा पावनी परा ॥ ४१ ॥

अप्रतर्क्याऽपरिमिता भवभ्रांतिविनाशिनी ।
एका द्विरूपा त्रिविधा असंख्याता सुरेश्वरी ।। ४२ ।।

सुप्रतिष्ठा महाधात्री स्थितिर्वृद्धिर्ध्रुवा गतिः ।
ईश्वरी महिमा ऋद्धिः प्रमोदा उज्ज्वलोद्यमा ।। ४३ ।।

अक्षया वर्द्धमाना च सुप्रकाशा विहङ्गमा ।
नीरजा जननी नित्या जया रोचिष्मती शुभा ।। ४४ ।।

तमोनुदा च ज्वाला च सुदीप्तिश्चांशुमालिनी ।
अप्रमेया त्रिधा सूक्ष्मा परा निर्वाणदायिनी ।। ४५ ।।

अवदाता सुशुद्धा च अमोघाख्या परंपरा ।
संधानकी शुद्धविद्या सर्वभूतमहेश्वरी ।। ४६ ।।

लक्ष्मीस्तुष्टिर्महाधीरा शांतिरापूरणे नवा ।
अनुग्रहाशक्तिराद्या जगज्ज्येष्ठा जगद्विधिः ।। ४७ ।।

सत्या प्रह्वा क्रियायोग्या ह्यपर्णा ह्लादिनी शिवा ।
सम्पूर्णाह्लादिनी शुद्धा ज्योतिष्मत्यमतावहा ।। ४८ ।।

रजोवत्यर्कप्रतिभाऽऽकर्षिणी कर्षिणी रसा ।
परा वसुमती देवी कांतिः शांतिर्मतिः कला ।। ४९ ।।

कला कलंकरहिता विशालोद्दीपनी रतिः ।
सम्बोधिनी हारिणी च प्रभावा भवभूतिदा ।। ५० ।।

अमृतस्यंदिनी जीवा जननी खण्डिका स्थिरा ।
धूमा कलावती पूर्णा भासुरा सुमती रसा ।। ५१ ।।

शुद्धा ध्वनिः सृतिः सृष्टिर्विकृतिः कृष्टिरेव च ।
प्रापणी प्राणदा प्रह्वा विश्वा पाण्डुरवासिनी ।। ५२ ।।

अवनिर्वज्रनलिका चित्रा ब्रह्माण्डवासिनी ।
अनंतरूपाऽनंतात्माऽनंतस्थाऽनंतसम्भवा ॥ ५३ ॥

महाशक्तिः प्राणशक्तिः प्राणदात्री रतिम्भरा ।
महासमूहा निखिला इच्छाधारा सुखावहा ॥ ५४ ॥

प्रत्यक्षलक्ष्मीर्निष्कम्पा प्ररोहा बुद्धिगोचरा ।
नानादेहा महावर्ता बहुदेहविकासिनी ॥ ५५ ॥

सहस्राणी प्रधाना च न्यायवस्तुप्रकाशिका ।
सर्वाभिलाषपूर्णेच्छा सर्वा सर्वार्थभाषिणी ॥ ५६ ॥

नानास्वरूपचिद्धात्री शब्दपूर्वा पुरातना ।
व्यक्ताऽव्यक्ता जीवकेशा सर्वेच्छापरिपूरिता ॥ ५७ ॥

सङ्कल्पसिद्धा सांख्येया तत्त्वगर्भा धरावहा ।
भूतरूपा चित्स्वरूपा त्रिगुणा गुणगर्विता ॥ ५८ ॥

प्रजापतीश्वरी रौद्री सर्वाधारा सुखावहा ।
कल्याणवाहिका कल्या कलिकल्मषनाशिनी ॥ ५९ ॥

नीरूपोद्भिन्नसंताना सुयंत्रा त्रिगुणालया ।
महामाया योगमाया महायोगेश्वरी प्रिया ॥ ६० ॥

महास्त्री विमला कीर्तिर्जया लक्ष्मीर्निरञ्जना ।
प्रकृतिर्भगवन्मायाशक्तिर्निद्रा यशस्करी ॥ ६१ ॥

चिन्ता बुद्धिर्यशः प्रज्ञा शांतिराप्रीतिवर्धिनी ।
प्रद्युम्नमाता साध्वी च सुखसौभाग्यसिद्धिदा ॥ ६२ ॥

काष्ठा निष्ठा प्रतिष्ठा च ज्येष्ठा श्रेष्ठा जयावहा ।
सर्वातिशायिनी प्रीतिर्विश्वशक्तिर्महाबला ॥ ६३ ॥

वरिष्ठा विजया वीरा जयंती विजयप्रदा।
हृद्गुहा गोपिनी गुह्या गणगंधर्वसेविता ॥ ६४ ॥

योगीश्वरी योगमाया योगिनी योगसिद्धिदा।
महायोगेश्वरवृता योगा योगेश्वरप्रिया ॥ ६५ ॥

ब्रह्मेन्द्ररुद्रनमिता सुरासुरवरप्रदा।
त्रिवर्त्मगा त्रिलोकस्था त्रिविक्रमपदोद्भवा ॥ ६६ ॥

सुतारा तारिणी तारा दुर्गा संतारिणी परा।
सुतारिणी तारयंती भूरितारेश्वरप्रभा ॥ ६७ ॥

गुह्यविद्या यज्ञविद्या महाविद्यासुशोभिता।
अध्यात्मविद्या विघ्नेशी पद्मस्था परमेष्ठिनी ॥ ६८ ॥

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिर्नयात्मिका।
गौरी वागीश्वरी गोप्त्री गायत्री कमलोद्भवा ॥ ६९ ॥

विश्वम्भरा विश्वरूपा विश्वमाता वसुप्रदा।
सिद्धिः स्वाहा स्वधा स्वस्ति सुधा सर्वार्थसाधिनी ॥ ७० ॥

इच्छा सृष्टिर्द्युतिर्भूतिः कीर्तिः श्रद्धा दया मतिः।
श्रुतिर्मेधा धृतिर्ह्रीः श्रीर्विद्या विबुधवन्दिता ॥ ७१ ॥

अनसूया घृणा नीतिर्निर्वृतिः कामधुक्करा।
प्रतिज्ञा संततिर्भूतिर्द्यौः प्रज्ञा विश्वमानिनी ॥ ७२ ॥

स्मृतिर्वाग्विश्वजननी पश्यंती मध्यमा समा।
संध्या मेधा प्रभा भीमा सर्वाकारा सरस्वती ॥ ७३ ॥

कांक्षा माया महामायामोहिनी माधवप्रिया।
सौम्याभोगा महाभोगा भोगिनी भोगदायिनी ॥ ७४ ॥

सुधौतकनकप्रख्या सुवर्णकमलासना ।
हिरण्यगर्भा सुश्रोणी हारिणी रमणी रमा ।। ७५ ।।

चन्द्रा हिरण्मयी ज्योत्स्ना रम्या शोभा शुभावहा ।
त्रैलोक्यमण्डना नारीनरेश्वरवरार्चिता ।। ७६ ।।

त्रैलोक्यसुंदरी रामा महाविभववाहिनी ।
पद्मस्था पद्मनिलया पद्ममालाविभूषिता ।। ७७ ।।

पद्मयुग्मधरा कांता दिव्याभरणभूषिता ।
विचित्ररत्नमुकुटा विचित्राम्बरभूषणा ।। ७८ ।।

विचित्रमाल्यगंधाढ्या विचित्रायुधवाहना ।
महानारायणीदेवी वैष्णवी वीरवंदिता ।। ७९ ।।

कालसंकर्षिणी घोरा तत्त्वसंकर्षिणी कला ।
जगत्सम्पूरणी विश्वा महाविभवभूषणा ।। ८० ।।

वारुणी वरदा व्याख्या घण्टाकर्णविराजिता ।
नृसिंही भैरवी ब्राह्मी भास्करी व्योमचारिणी ।। ८१ ।।

ऐन्द्री कामधनुः सृष्टिः कामयोनिर्महाप्रभा ।
दृष्टा काम्या विश्वशक्तिर्बीजगत्यात्मदर्शना ।। ८२ ।।

गरुडारूढहृदया चान्द्री श्रीर्मधुरानना ।
महोग्ररूपा वाराहीनारसिंहीहतासुरा ।। ८३ ।।

युगांतहुतभुग्ज्वाला कराला पिंगला कला ।
त्रैलोक्यभूषणा भीमा श्यामा त्रैलोक्यमोहिनी ।। ८४ ।।

महोत्कटा महारक्ता महाचण्डा महासना ।
शंखिनी लेखिनी स्वस्थालिखिता खेचरेश्वरी ।। ८५ ।।

भद्रकाली चैकवीरा कौमारी भगमालिनी ।
कल्याणी कामधुग्ज्वालामुखी चोत्पलमालिका ॥ ८६ ॥

बालिका धनदा सूर्या हृदयोत्पलमालिका ।
अजिता वर्षिणी रीतिर्भेरुण्डा गरुडासना ॥ ८७ ॥

वैश्वानरीमहामाया महाकाली विभीषणा ।
महामंदारविभवा शिवानन्दा रतिप्रिया ॥ ८८ ॥

उद्रीतिः पद्ममाला च धर्मवेगा विभावनी ।
सत्क्रिया देवसेना च हिरण्यरजताश्रया ॥ ८९ ॥

सहसावर्तमाना च हस्तिनादप्रबोधिनी ।
हिरण्यपद्मवर्णा च हरिभद्रा सुदुर्धरा ॥ ९० ॥

सूर्या हिरण्य प्रकटसदृशी हेममालिनी ।
पद्मानना नित्यपुष्टा देवमाताऽमृतोद्भवा ॥ ९१ ॥

महाधना च या शृङ्गी कार्दमी कम्बुकंधरा ।
आदित्यवर्णा चन्द्राभा गंधद्वारा दुरासदा ॥ ९२ ॥

वरार्चिता वरारोहा वरेण्या विष्णुवल्लभा ।
कल्याणी वरदा वामा वामेशी विन्ध्यवासिनी ॥ ९३ ॥

योगनिद्रा योगरता देवकीकामरूपिणी ।
कंसविद्राविणी दुर्गा कौमारी कौशिकी क्षमा ॥ ९४ ॥

कात्यायनी कालरात्रिर्निशितृप्ता सुदुर्जया ।
विरूपाक्षी विशालाक्षी भक्तानां परिरक्षिणी ॥ ९५ ॥

बहुरूपास्वरूपा च विरूपा रूपवर्जिता ।
घण्टानिनादबहुला जीमूतध्वनिनिस्वना ॥ ९६ ॥

महासुरेन्द्रमथिनी भ्रुकुटीकुटिलानना।
सत्योपयाचिता चैका कौबेरी ब्रह्मचारिणी ॥ ९७ ॥

आर्या यशोदासुतदा धर्मकामार्थमोक्षदा।
दारिद्र्यदुःखशमनी घोरदुर्गार्तिनाशिनी ॥ ९८ ॥

भक्तार्तिशमनी भव्या भवभर्गापहारिणी।
क्षीराब्धितनया पद्मा कमला धरणीधरा ॥ ९९ ॥

रुक्मिणी रोहिणी सीता सत्यभामा यशस्विनी।
प्रज्ञाधाराऽमितप्रज्ञा वेदमाता यशोवती ॥ १०० ॥

समाधिर्भावना मैत्री करुणा भक्तवत्सला।
अंतर्वेदीदक्षिणा च ब्रह्मचर्य्यपरागतिः ॥ १०१ ॥

दीक्षा वीक्षा परीक्षा च समीक्षा वीरवत्सला।
अम्बिका सुरभिः सिद्धा सिद्धविद्याधरार्चिता ॥ १०२ ॥

सुदीप्ता लेलिहाना च कराला विश्वपूरका।
विश्वसंहारिणी दीप्तिस्तपिनी ताण्डवप्रिया ॥ १०३ ॥

उद्भवा विरजाराज्ञी तापनी बिन्दुमालिनी।
क्षीरधारासुप्रभावा लोकमाता सुवर्चला ॥ १०४ ॥

हव्यगर्भा चाज्यगर्भा जुह्वतो यज्ञसम्भवा।
आप्यायनी पावनी च दहनी दहनाश्रया ॥ १०५ ॥

मातृका माधवी मुच्या मोक्षलक्ष्मीर्महर्द्धिदा।
सर्वकामप्रदा भद्रा सुभद्रा सर्वमंगला ॥ १०६ ॥

श्वेता सुशुक्लवसना शुक्लमाल्यानुलेपना।
हंसा हीनकरी हंसी हृद्या हृत्कमलालया ॥ १०७ ॥

सितातपत्रा सुश्रोणी पद्मपत्रायतेक्षणा ।
सावित्री सत्यसङ्कल्पा कामदा कामकामिनी ॥ १०८ ॥

दर्शनीया दृशा दृश्या स्पृश्या सेव्या वराङ्गना ।
भोगप्रिया भोगवती भोगीन्द्रशयनासना ॥ १०९ ॥

आर्द्रा पुष्करिणी पुण्या पावनी पापसूदनी ।
श्रीमती च शुभाकारा परमैश्वर्यभूतिदा ॥ ११० ॥

अचिंत्यानंतविभवा भवभावविभावनी ।
निश्रेणिः सर्वदेहस्था सर्वभूतनमस्कृता ॥ १११ ॥

बला बलाधिका देवी गौतमी गोकुलालया ।
तोषिणी पूर्णचन्द्राभा एकानन्दा शतानना ॥ ११२ ॥

उद्याननगरद्वारहर्म्योपवनवासिनी ।
कूष्माण्डी दारुणा चण्डा किराती नन्दनालया ॥ ११३ ॥

कालायना कालगम्या भयदा भयनाशिनी ।
सौदामिनी मेघरवा दैत्यदानवमर्दिनी ॥ ११४ ॥

जगन्माताऽभयकरी भूतधात्री सुदुर्लभा ।
काश्यपी शुभदाना च वनमाला शुभा वरा ॥ ११५ ॥

धन्या धन्येश्वरी धन्या रत्नदा वसुवर्धिनी ।
गांधर्वी रेवती गङ्गा शकुनी विमलानना ॥ ११६ ॥

इडा शांतिकरी चैव तामसी कमलालया ।
आज्यपा वज्रकौमारी सोमपा कुसुमाश्रया ॥ ११७ ॥

जगत्प्रिया च सरथा दुर्जया खगवाहना ।
मनोभवा कामचारा सिद्धचारणसेविता ॥ ११८ ॥

व्योमलक्ष्मीर्महालक्ष्मीस्तेजोलक्ष्मीः सुजाज्वला ।
रसलक्ष्मीर्जगद्योनिर्गंधलक्ष्मीर्वनाश्रया ॥ ११९ ॥

श्रवणा श्रावणीनेत्रा रसनाप्राणचारिणी ।
विरिञ्चिमाता विभवा वरवारिजवाहना ॥ १२० ॥

वीर्या वीरेश्वरी वन्द्या विशोका वसुवर्धिनी ।
अनाहता कुण्डलिनी नलिनी वनवासिनी ॥ १२१ ॥

गांधारिणीन्द्रनमिता सुरेन्द्रनमिता सती ।
सर्वमंगलमांगल्या सर्वकामसमृद्धिदा ॥ १२२ ॥

सर्वानन्दा महानन्दा सत्कीर्तिः सिद्धसेविता ।
सिनीवाली कुहू राका अमा चानुमतिर्द्युतिः ॥ १२३ ॥

अरुंधती वसुमती भार्गवी वास्तुदेवता ।
मयूरी वज्रवेताली वज्रहस्ता वरानना ॥ १२४ ॥

अनघा धरणिर्धीरा धमनी मणिभूषणा ।
राजश्रीरूपसहिता ब्रह्मश्रीर्ब्रह्मवन्दिता ॥ १२५ ॥

जयश्रीर्जयदा ज्ञेया सर्गश्रीः स्वर्गतिः सताम् ।
सुपुष्पा पुष्पनिलया फलश्रीर्निष्कलप्रिया ॥ १२६ ॥

धनुर्लक्ष्मीस्त्वमिलिता परक्रोधनिवारिणी ।
कद्रूर्धनायुः कपिला सुरसा सुरमोहिनी ॥ १२७ ॥

महाश्वेता महानीला महामूर्तिर्विषापहा ।
सुप्रभा ज्वालिनी दीप्तिस्तृतिर्व्याप्तिः प्रभाकरी ॥ १२८ ॥

तेजोवती पद्मबोधा मदलेखाऽरुणावती ।
रत्ना रत्नावलीभूता शतधामा शतापहा ॥ १२९ ॥

त्रिगुणा घोषिणी रक्ष्या नर्दिनी घोषवर्जिता ।
साध्याऽदितिर्दितिर्देवी मृगवाहा मृगांकगा ॥ १३० ॥

चित्रनीलोत्पलगता वृतरत्नाकराश्रया ।
हिरण्यरजतद्वंन्द्वा शंखभद्रासनस्थिता ॥ १३१ ॥

गोमूत्रगोमयक्षीरदधिसर्पिर्जलाश्रया ।
मरीचिश्चीरवसना पूर्णचन्द्रार्कविष्टरा ॥ १३२ ॥

सुसूक्ष्मा निर्वृतिः स्थूला निवृत्तारातिरेव च ।
मरीचिर्ज्वालिनी धूम्रा हव्यवाहा हिरण्यदा ॥ १३३ ॥

दायिनी कालिनीसिद्धिः शोषिणी संप्रबोधिनी ।
भास्वरा संहतिस्तीक्ष्णा प्रचण्डज्वलनोज्ज्वला ॥ १३४ ॥

सांगा प्रचण्डा दीप्ता च वैद्युतिः सुमहाद्युतिः ।
कपिला नीलरक्ता च सुषुम्ना विस्फुलिङ्गिनी ॥ १३५ ॥

अर्चिष्मती रिपुहरा दीर्घा धूमावली जरा ।
सम्पूर्णमण्डला पूषा स्रंसिनी सुमनोहरा ॥ १३६ ॥

जया पुष्टिकरी च्छाया मानसा हृदयोज्ज्वला ।
सुवर्णकरणी श्रेष्ठा मृतसंजीवनी रणे ॥ १३७ ॥

विशल्यकरणी शुभ्रा संधिनी परमौषधिः ।
ब्रह्मिष्ठा ब्रह्मसहिता ऐन्दवी रत्नसम्भवा ॥ १३८ ॥

विद्युत्प्रभा बिन्दुमती त्रिस्वभावगुणाम्बिका ।
नित्योदिता नित्यहृष्टा नित्यकामा करीषिणी ॥ १२९ ॥

पद्मांका वज्रचिह्ना च वक्रदण्डा विभासिनी ।
विदेहपूजिता कन्या माया विजयवाहिनी ॥ १४० ॥

मानिनी मंगला मान्या मानिनी मानदायिनी।
विश्वेश्वरी गणवती मण्डला मण्डलेश्वरी॥ १४१॥

हरिप्रिया भौमसुता मनोज्ञा मतिदायिनी।
प्रत्यंगिरा सोमगुप्ता मनोभिज्ञा वदन्मतिः॥ १४२॥

यशोधरा रत्नमाला कृष्णा त्रैलोक्यबंधिनी।
अमृता धारिणी हर्षा विनता वल्लकी शची॥ १४३॥

संकल्पा भामिनी मिश्रा कादम्बर्यमृता प्रभा।
आगता निर्गता वज्रा सुहिता सहिताऽक्षता॥ १४४॥

सर्वार्थसाधनकरी धातुर्धारणिकाऽमला।
करुणाधारसम्भूता कमलाक्षी शशिप्रिया॥ १४५॥

सौम्यरूपा महादीप्ता महाज्वाला विकासिनी।
माला कांचनमाला च सद्वज्रा कनकप्रभा॥ १४६॥

प्रक्रिया परमा योक्त्री क्षोभिका च सुखोदया।
विजृम्भणा च वज्राख्या शृंखला कमलेक्षणा॥ १४७॥

जयंकरी मधुमती हरिता शशिनी शिवा।
मूलप्रकृतिरीशाना योगमाता मनोजवा॥ १४८॥

धर्मोदया भानुमती सर्वाभासा सुखावहा।
धुरंधरा च बाला च धर्मसेव्या तथागता॥ १४९॥

सुकुमारा सौम्यमुखी सौम्यसंबोधनोत्तमा।
सुमुखी सर्वतोभद्रा गुह्यशक्तिर्गुहालया॥ १५०॥

हलायुधा च कावीरा सर्वशास्त्रसुधारिणी।
व्योमशक्तिर्महादेहा व्योमगा मधुमन्मयी॥ १५१॥

गंगा वितस्ता यमुना चन्द्रभागा सरस्वती ।
तिलोत्तमोर्वशी रम्भा स्वामिनी सुरसुन्दरी ॥ १५२ ॥

बाणप्रहरणा बाला बिम्वोष्ठी चारुहासिनी ।
ककुद्मिनी चारुपृष्ठा दृष्टादृष्टफलप्रदा ॥ १५३ ॥

काम्याचारी च काम्या च कामाचारविहारिणी ।
हिमशैलेन्द्रसंकाशा गजेन्द्रवरवाहना ॥ १५४ ॥

अशेषसुखसौभाग्यसम्पदां योनिरुत्तमा ।
सर्वोत्कृष्टा सर्वमयी सर्वा सर्वेश्वरप्रिया ॥ १५५ ॥

सर्वाङ्गयोनिः साऽव्यक्ता सम्प्रदानेश्वरेश्वरी ।
विष्णुवक्षःस्थलगता किमतः परमुच्यते ॥ १५६ ॥

परा निर्महिमा देवी हरिवक्षःस्थलाश्रया ।
सा देवी पापहंत्री च सान्निध्यं कुरुतान्मम ॥ १५७ ॥

इति नाम्नां सहस्रं तु लक्ष्म्याः प्रोक्तं शुभावहम् ।
परावरेण भेदेन मुख्यगौणेन भागतः ॥ १५८ ॥

यश्चैतत्कीर्तयेन्नित्यं शृणुयाद्वापि पद्मज ।
शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ॥ १५९ ॥

श्रीनिवासं समभ्यर्च्य पुष्पधूपानुलेपनैः ।
भोगैश्च मधुपर्काद्यैर्यथाशक्ति जगद्गुरुम् ॥ १६० ॥

तत्पाश्र्वस्थां श्रियं देवीं संपूज्य श्रीधरप्रियाम् ।
ततो नामसहस्रेण तोषयेत्परमेश्वरीम् ॥ १६१ ॥

नानारत्नावलीस्तोत्रमिदं यः सततं पठेत् ।
प्रसादाभिमुखी लक्ष्मीः सर्वं तस्मै प्रयच्छति ॥ १६२ ॥

यस्या लक्ष्म्याश्च सम्भूताः शक्तयो विश्वगाः सदा ॥
कारणत्वं न तिष्ठंति जगत्यस्मिंश्चराचरे ॥ १६३ ॥

तस्मात्प्रीता जगन्माता श्रीर्यस्याच्युतवल्लभा ।
सुप्रीताः शक्तयस्तस्य सिद्धिमिष्टां दिशंति हि ॥ १६४ ॥

एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः ।
तदंशशक्तिमंतोऽन्ये ब्रह्मेशानादयो यथा ॥ १६५ ॥

तथैवैका परा शक्तिः श्रीस्तस्य करुणाश्रया ।
ज्ञानादिषाड्गुण्यमयी या प्रोक्ता प्रकृतिः परा ॥ १६६ ॥

एकैव शक्तिः श्रीस्तस्या द्वितीयात्मनि वर्त्तते ।
परा परेशी सर्वेशी सर्वाकारा सनातनी ॥ १६७ ॥

अनंतनामधेया च शक्तिचक्रस्य नायिका ।
जगच्चराचरमिदं सर्वं व्याप्य व्यवस्थिता ॥ १६८ ॥

तस्मादेकैव परमा श्रीर्ज्ञेया विश्वरूपिणी ।
सौम्या सौम्येन रूपेण संस्थिता नटजीववत् ॥ १६९ ॥

यो यो जगति पुंभावः स विष्णुरिति निश्चयः ।
या या तु नारीभावस्था तत्र लक्ष्मीर्व्यवस्थिता ॥ १७० ॥

प्रकृतेः पुरुषाच्चान्यस्तृतीयो नैव विद्यते ।
अथ किं बहुनोक्तेन नरनारीमयो हरिः ॥ १७१ ॥

अनेकभेदभिन्नस्तु क्रियते परमेश्वरः ।
महाविभूतिं दयितां ये स्तुवंत्यच्युतप्रियाम् ॥ १७२ ॥

ते प्राप्नुवंति परमां लक्ष्मीं संशुद्धचेतसः ।
पद्मयोनिरिदं प्राप्य पठन्स्तोत्रमिदं क्रमात् ॥ १७३ ॥

दिव्यमष्टगुणैश्वर्यं तत्प्रसादाच्च लब्धवान् ।
सकामानां च फलदामकामानां च मोक्षदाम् ॥ १७४ ॥

पुस्तकाख्यां भयत्रात्रीं सितवस्त्रां त्रिलोचनाम् ।
महापद्मनिषण्णां तां लक्ष्मीमजरतां नमः ॥ १७५ ॥

करयुगलगृहीतं पूर्णकुंभं दधाना
क्वचिदमलगजस्था शंखपद्माक्षपाणिः ।
क्वचिदपि दयिताङ्गे चामरव्यग्रहस्ता
क्वचिदपि सृणिपाशं बिभ्रती हेमकांतिः ॥ १७६ ॥

इति पद्मपुराणे काश्मीरवर्णने हिरण्यगर्भहृदये सर्वकामप्रदायकं पुरुषोत्तमप्रोक्तं लक्ष्मीसहस्रनामस्तोत्रं समाप्तम् ॥

## श्रीदुर्गाध्यानम्

१. सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः
शंखं चक्रधनुः शरांश्च दधती नेत्रैस्त्रिभिः शोभिता।
आमुक्ताङ्गदहारकङ्कणरणत्काञ्ची रणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥

२. मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यते
हेलानिर्जित धूम्रलोचनवधे हे चण्डमुण्डार्दिनि।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुंभापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥

३. हेमप्रख्यामिन्दुखण्डार्धमौलिं
शंखारीष्टाभीतिहस्तां त्रिणेत्राम्।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां
देवीं दुर्गां दिव्यरूपां नमामि ॥

४. उद्यद्विद्युत्करालाकुलहरिगलसंस्थाऽरिशंखासिखेटे-
ष्विष्वा सारव्यत्रिशूलान् अरिगणभयदा तर्जनीं सन्दधाना।
चर्मास्युत्तीर्णदोर्भिः प्रहरण निपुणाभिर्वृता कन्यकाभिः
दद्या त्कार्शानवीष्टान् त्रिणयनललिता चापि कात्यायनी वः ॥

५. अरिशंखकृपाणखेट बाणान्
सुधनुः शूलककर्तरीं (तर्जनीं) दधाना।
भजतां महिषोत्तमाङ्गसंस्था
नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥

# श्री दुर्गाशतनामस्तोत्रम्

ईश्वर उवाच-

शतनाम प्रवक्ष्यामि शृणुष्व कमलानने।
यस्य प्रसादमात्रेण दुर्गा प्रीता सदा भवेत्॥ १॥

सती साध्वी भवप्रीता भवानी भवमोचनी।
आर्या दुर्गा जया आद्या त्रिनेत्रा शूलधारिणी॥ २॥

पिनाकधारिणी चित्रा चन्द्रघण्टा महातपा।
मनो बुद्धिरहंकारा चित्तरूपा चिता चितिः॥ ३॥

सर्वमन्त्रमयी सत्या सत्यानन्दस्वरूपिणी।
अनन्ता भाविनी भाव्या भवा भव्या सदागतिः॥ ४॥

शंभुपत्नी देवमाता चिन्ता रत्नप्रिया सदा।
सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी॥ ५॥

अपर्णा चैव पर्णा च पाटला पटलावती।
पट्टांबरपरीधाना कलमञ्जीररञ्जिनी॥ ६॥

अमेया विक्रमा क्रूरा सुन्दरी कुलसुन्दरी।
नवदुर्गा च मातङ्गी मतङ्गमुनिपूजिता॥ ७॥

ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः॥ ८॥

विमलोत्कर्षिणी ज्ञानक्रिया सत्या च वाक्प्रदा।
बहुला बहुलप्रेमा सर्ववाहनवाहना॥ ९॥

निशुंभ शुंभहननी महिषासुरमर्दिनी।
मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी॥ १०॥

सर्वासुरविनाशा च सर्वदानवघातिनी।
सर्वशास्त्रमयी विद्या सर्वास्त्रधारिणी तथा ॥ ११ ॥

अनेकशस्त्रहस्ता च अनेकास्त्रविधारिणी।
कुमारी चैव कन्या च कौमारी युवती यतिः ॥ १२ ॥

अप्रौढा चैव प्रौढा च वृद्धमाता बलप्रदा।
श्रद्धा शान्ति र्धृतिः कान्ति र्लक्ष्मी र्जातिः स्मृतिर्दया ॥ १३ ॥

तुष्टिः पुष्टिश्चितिर्भ्रान्ति र्माता क्षुच्चेतना मतिः।
विष्णुमाया च निद्रा च छाया कामप्रपूरणी ॥ १४ ॥

य इदं च पठेत्स्तोत्रं दुर्गानामशताष्टकम्।
नासाध्यं विद्यते देवि त्रिषु लोकेषु पार्वति ॥ १५ ॥

धनं धान्यं सुतान् जायां हयं हस्तिनमेव च।
चतुर्वर्गं तथा चान्ते लभेन्मुक्तिं च शाश्वतीम् ॥ १६ ॥

कुमारीः पूजयित्वा ध्यात्वा देवीं सुरेश्वरीम्।
पूजयेत्परया भक्त्या पठेन्नामशताष्टकम् ॥ १७ ॥

तस्य सिद्धिर्भवेद्देवि सर्वैः सुरवरैरपि।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात् ॥ १८ ॥

गोरोचनालक्तककुंकुमेन सिन्दूरकर्पूरमधुत्रयेण।
विलिख्य यन्त्रं विधिना विधिज्ञो भवेत्सदा धारयता पुरारिः ॥ १९ ॥

भौमावास्या निशाभागे चन्द्रे शतभिषां गते।
विलिख्य प्रपठेत् स्तोत्रं स भवेत्संपदापदम् ॥ २० ॥

# श्री दुर्गासहस्रनामस्तोत्रम्

श्री दुर्गा त्रिजगन्माता श्रीमत्कैलासवासिनी ।
हिमाचलगुहाकान्त माणिक्यमणिमण्डपा ॥ १ ॥
गिरिदुर्गा गौरहस्ता गणनाथवृताङ्गणा ।
कल्पकारण्यसंवीत मालतीकुञ्जमन्दिरा ॥ २ ॥
धर्मसिंहासनारूढा डाकिन्यादिसमाश्रिता ।
सिद्धविद्याधरामर्त्यवधूटीनिकरस्तुता ॥ ३ ॥
चिन्तामणि शिलाक्लृप्तद्वारावलि गृहान्तरा ।
कटाक्षवीक्षणापेक्ष कमलाक्षि सुराङ्गना ॥ ४ ॥
लीलाभाषणसंलोलकमलासन वल्लभा ।
यामलोपनिषन्मन्त्र विलपत्शुकपुङ्गवा ॥ ५ ॥
दूर्वादलश्यामरूपा दुर्वारमतविह्वला ।
नवकोरक संपत् श्री कल्पकारण्यकुन्तला ॥ ६ ॥
वेणीकैतकबर्हांशु विजितस्मरपट्टसा ।
कचसीमन्तरेखान्तलंबमाणिक्यलंबिका ॥ ७ ॥
पुष्पबाणशरालीढ घनधम्मिल्ल भूषणा ।
भालचन्द्रकलाप्रान्त सत्सुधा बिन्दुमौक्तिका ॥ ८ ॥
चूलीकादम्बिनीश्लिष्ट चन्द्ररेखाललाटिका ।
चन्द्रमण्डलसंयुक्त भौमकुंकुमरेखिका ॥ ९ ॥
केशाभ्रमुक्त कोदण्ड सद्दृग्भ्रूलतिकाञ्चिता ।
मारचापलसत्शुभ्र मृगनाभिविशेषका ॥ १० ॥
कर्णपूरितकह्लारकांक्षितापांगवीक्षणा ।
क्षीराशयोत्पलाकार विलसत्कृष्णतारका ॥ ११ ॥

नेत्रपंकेरुहान्तःस्थ भ्रमद्भ्रमरतारका।
गरलावृतकल्लोल निमेषाञ्जनभासुरा ॥ १२ ॥

तीक्ष्णाग्र धार प्रद्युम्न शस्त्रप्रत्यस्त्रवीक्षणा।
मुखचन्द्र सुधापूर लुढन्मीनाभलोचना ॥ १३ ॥

मौक्तिकावृत ताटङ्क मण्डलद्वयमण्डिता।
कन्दर्पध्वजताकीर्ण मकराङ्कितकुण्डला ॥ १४ ॥

कर्णरत्नौघचिन्तार्क कमनीयमुखांबुजा।
कारुण्यस्यन्दिवदना कण्ठमूलसुकुङ्कुमा ॥ १५ ॥

ओष्ठबिम्बफलामोद शुकतुण्डाभनासिका।
तिलचंपकपुष्पश्री नासिकाभरणोज्ज्वला ॥ १६ ॥

नासाचंपकसंस्रस्त मधुबिन्दुक मौक्तिका।
मुखपङ्कज किञ्जल्क मुक्ताजाल सुनासिका ॥ १७ ॥

सालुवेशमुखास्वाद लोलुपाधर पल्लवा।
रदनांशनटीरंग प्रस्तावनपटाधरा ॥ १८ ॥

दन्तलक्ष्मीगृहद्वार नीशारांश्वधरच्छदा।
विद्रुमाधरबालार्क मिश्रस्मेरांशु कौमुदी ॥ १९ ॥

मन्त्रबीजांकुराकार द्विजावलिविराजिता।
सल्लापलक्ष्मी मांगल्य मौक्तिकस्रग्रदालया ॥ २० ॥

तांबूलसारसौगन्धिसकलाम्नायतालुका।
कर्णलक्ष्मी विलासार्थ मणिदर्पणगण्डभूः ॥ २१ ॥

कपोलमुकुलाक्रान्त कर्णताटङ्कदीधितिः।
मुखपद्मरजस्तूलहरिद्राचूर्णमण्डिता ॥ २२ ॥

कण्ठादर्शप्रभासान्द्र विजितश्रीविराजिता।
देशिकेशहृदानन्द संपच्चिबुकपेटिका ॥ २३ ॥

शरभाधीशसंबद्ध मांगल्यमणि कन्धरा।
कस्तूरी पङ्क सञ्जात गलनालमुखांबुजा ॥ २४ ॥
लावण्यांभोधिमध्यस्थ शंखसन्निभकन्धरा।
गलशंख प्रसूतांशुमुक्तादाम विराजिता ॥ २५ ॥
मालती मल्लिका तुल्य भुजद्वयमनोहरा।
कनकाङ्गदकेयूरच्छविनिर्जित भास्करा ॥ २६ ॥
प्रकोष्ठवलयाक्रान्त परिवेषग्रह द्युतिः।
वलयद्वयवैडूर्य ज्वालालीढकराम्बुजा ॥ २७ ॥
बाहुद्वयलताग्रस्त पल्लवाभकरांगुलिः।
करपङ्केरुह भ्राम्यद्रविमण्डल कङ्कणा ॥ २८ ॥
अङ्गुलीविद्रुमलता पर्वस्वर्णाङ्गुलीयका।
भाग्यप्रद करान्तस्थ शंखचक्राङ्क मुद्रिका ॥ २९ ॥
करपद्मदलप्रान्तभास्वद्रत्ननखांकुरा।
रत्नग्रैवेय हारातिरमणीयकुचान्तरा ॥ ३० ॥
प्रालंबिकौस्तुभमणि प्रभालिप्त स्तनान्तरा।
शरभाधीशनेत्रांशुकञ्चुकस्तनमण्डला ॥ ३१ ॥
रतीविवाहकालश्रीपूर्णकुंभस्तनद्वया।
अनङ्ग जीवनप्राण मन्त्रकुंभस्तनद्वया ॥ ३२ ॥
मध्यवल्ली प्राज्यफलद्वयवक्षोजभासुरा।
स्तनपर्वत पर्यन्त चित्रकुङ्कुमपत्रिका ॥ ३३ ॥
भ्रमरालीढराजीवकुड्मलस्तनचूचुका।
महाशरभहृद्रागरक्तवस्त्रोत्तरीयका ॥ ३४ ॥
अनौपम्यातिलावण्य पार्ष्णिभागाभिनन्दिता।
स्तनस्तबकराराजद्रोमवल्ली तलोदरा ॥ ३५ ॥

कृष्णरोमावलीकृष्ण सप्तपत्रोदरच्छविः ।
सौन्दर्यपूरसंपूर्ण प्रवाहावर्तनाभिका ॥ ३६ ॥

अनङ्ग रसपूराब्धितरङ्गाभवलित्रया ।
सन्ध्यारुणांशु कौसुंभपटावृत कटीतटी ॥ ३७ ॥

सप्तकिंकिणिका शिञ्जद्रत्न कान्तिकलापिनी ।
मेखलादामसङ्कीर्णमयूखावृतनीविका ॥ ३८ ॥

सुवर्ण सूत्राकलित सूक्ष्मरक्तांबराचला ।
वीरेश्वरानङ्गसरित्पुलिनीजघनस्थला ॥ ३९ ॥

असादृश्य नितंबश्रीरम्यरंभोरुकाण्डयुक् ।
हलमल्लक नेत्राभाव्याप्त सन्धिमनोहरा ॥ ४० ॥

जानुमण्डलधिक्कारि राशिकूटतटीकटी ।
स्मरतूणीरसङ्काशजंघाद्वितयसुन्दरी ॥ ४१ ॥

गुल्फद्वितय सौभाग्य जितताल फलद्वयी ।
द्युमणि म्रक्षणाभांघ्रियुग्मनूपुरमण्डला ॥ ४२ ॥

रणद्वलय सल्लापद्रत्नमालाभपादुका ।
प्रपदात्मक शस्त्रौघविलसच्चर्मपुस्तका ॥ ४३ ॥

आधारकूर्मपृष्ठाभ पादपृष्ठविराजिता ।
पादाङ्गुलिप्रभाजाल पराजितदिवाकरा ॥ ४४ ॥

चक्रचामरमत्स्याङ्क चरणस्थलपङ्कजा ।
सुरेन्द्रकोटिमकुटी रत्नसंक्रान्तपादुका ॥ ४५ ॥

अव्याजकरुणागुप्ततनुः अव्याजसुन्दरी ।
शृङ्गाररससाम्राज्य पदपट्टाभिषेचिता ॥ ४६ ॥

शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
उमा कात्यायनी भद्रा पार्वती पावनाकृतिः ॥ ४७ ॥

मृडानी चण्डिका माता रतिर्मङ्गलदेवता ।
काली हैमवती वीरा कपालशूल धारिणी ॥ ४८ ॥

शरभा शांभवी मायातन्त्रा तन्त्रार्थरूपिणी ।
तरुणी धर्मदा धर्मतापसी तारकाकृतिः ॥ ४९ ॥

हरा महेश्वरी मुग्धा हंसिनी हंसवाहना ।
भाग्या बलकरी नित्या भक्तिगम्या भयापहा ॥ ५० ॥

मातङ्गी रसिका मत्ता मालिनी माल्यधारिणी ।
मोहिनी मुदिता कृष्णा मुक्तिदा मोदहर्षिता ॥ ५१ ॥

शृङ्गारी श्रीकरी शूरजयिनी जयशृङ्खला ।
सती तारात्मिका तन्वी तारनादा तटित्प्रभा ॥ ५२ ॥

अपर्णा विजया नीलीरञ्जिता त्वपराजिता ।
शङ्करी रमणीरामा शैलेन्द्रतनया मही ॥ ५३ ॥

बाला सरस्वती लक्ष्मीः परमा परदेवता ।
गायत्रीरसिका विद्या गंगा गंभीर वैभवा ॥ ५४ ॥

देवी दाक्षायणी दक्षदमनी दारुणप्रभा ।
मारी मारकरी मृष्टा मन्त्रिणी मन्त्रविग्रहा ॥ ५५ ॥

ज्वालामयी परारक्ता ज्वालाक्षी धूम्रलोचना ।
वामाकुतूहला कुल्या कोमला कुड्मलस्तनी ॥ ५६ ॥

दण्डिनी मुण्डिनी धीरा जयकन्या जयङ्करी ।
चामुण्डी चण्डमुण्डेशी चण्डमुण्डनिषूदनी ॥ ५७ ॥

भद्रकाली वह्निदुर्गा पालितामरसैनिका ।
योगिनीगणसंवीता प्रबला हंसगामिनी ॥ ५८ ॥

शुंभासुरप्राणहन्त्री सूक्ष्मा शोभनविक्रमा ।
निशुंभवीर्यशमनी निर्निद्रा निरुपप्लवा ॥ ५९ ॥

धर्मसिंहधृता माली नारसिंहांगलोलुपा।
भुजाष्टकयुता तुङ्गा तुङ्ग सिंहासनेश्वरी ॥ ६० ॥

राजराजेश्वरी ज्योत्स्ना राज्यसाम्राज्यदायिनी।
मन्त्रकेलिशुकालापा महनीया महाशना ॥ ६१ ॥

दुर्वारकरुणासिन्धुर्धूमला दुष्टनाशिनी।
वीरलक्ष्मीर्वीरपूज्या वीरवेषमहोत्सवा ॥ ६२ ॥

वनदुर्गा वह्निहस्ता वाञ्छितार्थप्रदायिनी।
वनमाली च वाराही वागासारनिवासिनी ॥ ६३ ॥

एकाकिन्येकसिंहस्था चैकदन्तप्रसूतिनी।
नृसिंहचर्मवसना निर्निरीक्ष्या निरङ्कुशा ॥ ६४ ॥

नृपालवीर्यनिर्वेगा नीचग्रामनिषूदिनी।
सुदर्शनास्त्रदर्पघ्नी सोमखण्डावतंसिका ॥ ६५ ॥

पुलिन्दकुलसंसेव्या पुष्पधुत्तूरमालिका।
गुञ्जामणिलसन्माला शंखताटङ्कशोभिनी ॥ ६६ ॥

मातङ्गमदसिन्दूरतिलका मधुवासिनी।
पुलिन्दिनीश्वरी श्यामा चलचेलकटिस्थला ॥ ६७ ॥

बर्हावतंस धम्मिल्ला तमालश्यामलाकृतिः।
शत्रुसंहार शस्त्रांग पाशकोदण्डधारिणी ॥ ६८ ॥

कङ्काली नारसिंहाङ्ग रक्तपानसमुत्सुका।
वसामलिन वाराहदंष्ट्रा प्रालम्बमालिका ॥ ६९ ॥

सन्ध्यारुण जटाधारि कालमेघसमप्रभा।
चतुर्मुखशिरोमाला सर्पयज्ञोपवीतिनी ॥ ७० ॥

दक्षयज्ञानलध्वंस दलितामरडांभिका।
वीरभद्रामोदकर वीराटोपविहारिणी ॥ ७१ ॥

जलदुर्गा महामत्तदनुजप्राण भक्षिणी।
परमन्त्रभक्षिवह्निज्वालाकीर्णत्रिलोचना॥ ७२॥

शत्रुशल्यमयामोघ नादनिर्भिन्नदानवा।
राक्षसप्राणमथनवक्रदंष्ट्रामहोज्वला। ७३॥

क्षुद्रग्रहापहा क्षुद्रमन्त्रतन्त्रक्रियापहा।
व्याघ्राजिनांबरधरा व्यालकङ्कणभूषणा॥ ७४॥

बलिपूजाप्रियक्षुद्रपैशाचमदनाशिनी।
संमोहनास्त्र मन्त्रात्त दानवौघ विनाशिनी॥ ७५॥

कामक्रान्तमनोवृत्तिः कामकेलि कलारता।
कर्पूरवीटिकाप्रीता कामिनीजनमोहिनी॥ ७६॥

स्वप्नवती स्वप्न भोग ध्वंसिताखिल दानवा।
आकर्षणक्रियालोला चाश्रिताभीष्टदायिनी॥ ७७॥

ज्वालामुखी ज्वालनेत्रा ज्वालाङ्गा ज्वरनाशिनी।
शल्याकरी शल्यहन्त्री शल्यमन्त्रचलाचला॥ ७८॥

चतुर्थ्यकुहरा रौद्री तापघ्नी दरनाशिनी।
दारिद्र्यशमनी क्रुद्धा व्याधिनी व्याधिनाशिनी॥ ७९॥

ब्रह्मरक्षोहरा ब्राह्मी गणहारी गणेश्वरी।
आवेशग्रह संहारी हन्त्री मन्त्री हरिप्रिया॥ ८०॥

कृत्तिका कृत्तिहरणा गौरी गंभीरमानसा।
युद्धप्रीता युद्धकारी योद्धृगण्या युधिष्ठिरा॥ ८१॥

तुष्टिदा पुष्टिदा पुण्यभोगमोक्षफलप्रदा।
अपापा पापशमनी त्वरूपा रूपदारुणा॥ ८२॥

अन्नदा धनदा पूता त्वणिमादिफलप्रदा।
सिद्धिदा बुद्धिदा शूला शिष्टाचारपरायणा॥ ८३॥

अमाया ह्यमराराध्या हंसमन्त्रा हलायुधा।
क्षामप्रध्वंसिनी क्षोभ्या शार्दूलासनवासिनी ॥ ८४ ॥

सत्वरूपा तमोहन्त्री सौम्या सारङ्ग भावना।
द्विसहस्रकरा शुद्धा स्थूलसिंहसुवासिनी ॥ ८५ ॥

नारायणी महावीर्या नादबिन्द्वन्तरात्मिका।
षड्गुणा तत्वनिलया तत्वातीताऽमृतेश्वरी ॥ ८६ ॥

सुरमूर्तिः सुराराध्या सुमुखा कालरूपिणी।
सन्ध्यारूपा कान्तिमती खेचरी भुवनेश्वरी ॥ ८७ ॥

मूलप्रकृतिरव्यक्ता महामाया मनोन्मनी।
ज्येष्ठा वामा जगन्मूला सृष्टिसंहारकारणा ॥ ८८ ॥

स्वतन्त्रा स्ववशा लोकभोगदा सुरनन्दिनी।
चित्राचित्राकृतिश्चैव सचित्रवसनप्रिया ॥ ८९ ॥

विषापहा वेदमन्त्रा वेदविद्या विलासिनी।
कुण्डलीकन्दनिलया गुह्या गुह्यकवन्दिता ॥ ९० ॥

कालरात्री कलानिष्ठा कौमारी काममोहिनी।
वश्यादिनी वरारोहा वन्दारुजनवत्सला ॥ ९१ ॥

संज्वालामालिनी शक्तिः सुराप्रीता सुवासिनी।
महिषासुरसंहारी मत्तमातङ्गगामिनी ॥ ९२ ॥

मदगन्धितमातङ्गा विद्युद्दामाभिसुन्दरी।
रक्तबी  ासुरध्वंसी वीरपाणारुणेक्षणा ॥ ९३ ॥

महिषोत्तमसंरूढ मांसप्रोतायुताश्चला।
यशोवती हेमकूट तुङ्गशृङ्ग निकेतना ॥ ९४ ॥

दानकल्पकसच्छाया सन्तानादिफलप्रदा।
आश्रिताभीष्टवरदा चाखिलागमगोपिता ॥ ९५ ॥

दारिद्र्यशैलदंभोलिः क्षुद्रपङ्कजचन्द्रिका।
रोगान्धकारचण्डांशुः पापद्रुमकुठारिका॥ ९६॥
भवाटवीदाववह्निः शत्रुतूल स्फुलिङ्गरुक्।
स्फोटकोरकमायूरी क्षुद्रप्राणनिवारिणी॥ ९७॥
अपस्मार मृगव्याघ्री चित्तक्षोभविमोचिनी।
क्षयमातङ्गपञ्चास्या कृच्छ्रवर्गापहारिणी॥ ९८॥
पीनसश्वासकासघ्नी पिशाचोपाधिमोचिनी।
विवादशमनी लोकबाधापञ्चकनाशिनी॥ ९९॥
अपवादहरासेव्या संग्रामविजयप्रदा।
रक्तपित्तगलव्याधिहरा हरविमोहिनी॥ १००॥
क्षुद्रशल्यमया दासकार्यारंभसमुत्सुका।
कुष्ठगुल्मप्रमेहघ्नी गूढशल्यविनाशिनी॥ १०१॥
भक्तिमत्प्राणसौहार्दा सुहृद्वंशाभिवर्धिका।
उपास्या चाखिल म्लेच्छ मदमानविमोचनी॥ १०२॥
भैरवी भीषणा भीषा भिन्नारातिरणाञ्चला।
व्यूहध्वंसी वीरहव्या वीर्यात्मा व्यूहरक्षिका॥ १०३॥
महाराष्ट्रा महासेना मांसाशी माधवानुजा।
व्याघ्रध्वजा वज्रनखी वज्री व्याघ्रनिषूदनी॥ १०४॥
खड्गिनीकन्यकावेषा कौमारी खड्गवासिनी।
सङ्ग्रामवासिन्यस्तास्त्रा धीरज्यासायकासना॥ १०५॥
कोदण्डध्वनिकृत्क्रुद्धा क्रूरदृष्टिभयानका।
वीराग्रगामिनी दुष्टासन्तुष्टा शत्रुभक्षिणी॥ १०६॥
सन्ध्याटवीचरा वित्तगोपना वित्तकृच्चला।
कैटभासुरसंहारी काली कल्याणकोमला॥ १०७॥

नन्दिनी नन्दिचरिता नरकालयमोचना।
मलयाचलशृंगस्था गन्धिनी सुरतालसा॥ १०८॥

कादम्बरी कान्तिमती कान्ता कादंबराशना।
मधुदानवविद्रावी मधुपा पाटलारुणा॥ १०९॥

रात्रिश्चरा राक्षसघ्नी रम्या रात्रिसमर्चिता।
शिवरात्रिमहापूज्या देवलोक विहारिणी॥ ११०॥

ध्यानादिकालसञ्जप्या भक्तसन्तान भाग्यदा।
मध्याह्नकालसन्तर्प्या जयसंहारशूलिनी॥ १११॥

त्रियंबका मखध्वंसी त्रिपुरा पुरशूलिनी।
रङ्गस्था रञ्जिनी रङ्गा सिन्दूरारुणशालिनी॥ ११२॥

सुन्दोपसुन्द हन्त्री तु सूक्ष्मा मोहनशूलिनी।
अष्टमूर्तिः कलानाथा चाष्टहस्ता सुतप्रदा॥ ११३॥

अङ्गारका कोपनाक्षी हंसासुरमदापहा।
आपीनस्तननम्राङ्गी हरिद्रालेपितस्तनी॥ ११४॥

इन्द्राक्षी हेमसङ्काशा हेमवस्त्रा हरप्रिया।
ईश्वरी त्वितिहासात्मा ईतिबाधानिवारिणी॥ ११५॥

उपास्या चोन्मदाकारा ह्युल्लंघितसुरापगा।
ऊषरस्थलकासारा ह्युत्पलश्यामलाकृतिः॥ ११६॥

ऋङ्मयी सामसंगीता शुद्धिः कल्पकवल्लरी।
सायन्तनहुतिर्दासकामधेनुस्वरूपिणी॥ ११७॥

पञ्चदशाक्षरीमन्त्रा तारकावृतषोडशी।
ह्रीङ्कारनिष्ठा ह्रींकारहुङ्कारी दुरितापहा॥ ११८॥

षडङ्गा नवकोणस्था त्रिकोणा सर्वतोमुखी।
सहस्रवदना पद्मा शूलिनी सुरपालिनी॥ ११९॥

महाशूलधरा शक्तिर्माता माहेन्द्रपूजिता।
शूलदुर्गा शूलहरा शोभना चैव शूलिनी॥ १२०॥
श्रीशूलिनी जगद्बीजा मूलाहङ्कारशूलिनी।
प्रकाशा परमाकाशा भाविता वीरशूलिनी॥ १२१॥
नारसिंही महेन्द्राणी सालीशरभशूलिनी।
ऋङ्कार्यृतुमती चैवाघोराऽथर्वणगोपिका॥ १२२॥
घोरघोरा जपारागप्रसूनाञ्चितमालिका।
सुस्वरूपा सौहृदाढ्यालीढा दाडिमपाटका॥ १२३॥
लया च लंपटा लीना कुङ्कुमारुणकन्धरा।
इकाराध्या त्विलानाथा त्विलावृतजनावृता॥ १२४॥
ऐश्वर्यनिष्ठा हरिता हरितालसमप्रभा।
मुद्गमाषाज्यभोज्या च युक्तायुक्तभटान्विता॥ १२५॥
औत्सुकी चाणिमद्गम्या त्वखिलाण्डनिवासिनी।
हंसमुक्तामणिश्रेणिः हंसाख्या हासकारिणी॥ १२६॥
कलिदोषहरा क्षीरपायिनी विप्रपूजिता।
खट्वाङ्गस्था खड्गरूपा खबीजा खरसूदना॥ १२७॥
आज्यपायिन्यस्थिमाला पार्थिवाराध्यपादुका।
गंभीरनाभिका सिद्धकिन्नरस्त्री समावृता॥ १२८॥
खड्गात्मिका घननिभा वैश्याच्या माक्षिकप्रिया।
मकारवर्णा गंभीरा शूद्रार्च्या चासवप्रिया॥ १२९॥
चातुरी पार्वणाराध्या मुक्ताधावल्यरूपिणी।
छन्दोमयी भौमपूज्या दुष्टशत्रुविनाशिनी॥ १३०॥
जयिनी चाष्टमीसेव्या क्रूरहोमसमन्विता।
झङ्कारी नवमीपूज्या लाङ्गलीकुसुमप्रिया॥ १३१॥

सदा चतुर्दशीपूज्या भक्तानां पुष्टिकारिणी।
ज्ञानगम्या दर्शपूज्या डामरी रिपुमारिणी॥ १३२॥

सत्यसङ्कल्पसंवेद्या कलिकालसुसन्धिका।
डंभाकारा कल्पसिद्धा शल्यकौतुकवर्धिनी॥ १३३॥

ठाकृतिः कविवराराध्या सर्वसंपत्प्रदायिका।
नवरात्रि दिनाराध्या राष्ट्रदा राष्ट्रवर्धिनी॥ १३४॥

पानासवमदध्वंसि मूलिकासिद्धिदायिनी।
फलप्रदा कुबेराध्या पारिजातप्रसूनभाक्॥ १३५॥

बलिमन्त्रौघसंसिद्धा मन्त्रचिन्त्यफलावहा।
भक्तिप्रिया भक्तिगम्या किङ्करा भगमालिनी॥ १३६॥

माधवी विपिनान्तस्स्था महती महिषार्दिनी।
यजुर्वेदगता शंखचक्रहस्तांबुजद्वया॥ १३७॥

राजसा राजमातङ्गी राकाचन्द्रनिभानना।
लाघवालाघवाराध्या रमणीजन मध्यगा॥ १३८॥

वागीश्वरी वकुलमाल्या वाङ्मयी वारितासुखा।
शरभाधीशवनिता चन्द्रमण्डलमध्यगा॥ १३९॥

षडध्वान्तरतारा च रक्तजुष्टाहुतावहा।
तत्वज्ञानानन्दकलामया सायुज्य साधना॥ १४०॥

कर्मसाधकसंलीनधनदर्शनदा सदा।
हङ्कारिका स्थावरात्मा त्वमरीलास्यमोदना॥ १४१॥

लकारत्रयसंभूता ललिता लक्ष्मणार्चिता।
लक्ष्ममूर्तिस्सदाहारा प्रासादावासलोचना॥ १४२॥

नीलकण्ठी हरिद्रम्भिः शुकी गौरी च गोत्रजा।
अपर्णा यक्षिणी यक्षा हरिद्रा हलिनी हली॥ १४३॥

दद‍ती चोन्मदा चोर्मी रसा विश्वंभरा स्थिरा ।
पञ्चास्या पञ्चमीरागा भाग्ययोगात्मिकाम्बिका ॥ १४४ ॥

गणिका चैव काली च वीणा शोणारुणात्मिका ।
रमादूती कलासिंही लज्जा धूमवती जडा ॥ १४५ ॥

भृङ्गिसङ्गिसखी पीना स्नेहारोगमनस्विनी ।
रणीमृडा दृढा ज्येष्ठा रमणी यमुनारता ॥ १४६ ॥

मुसलीकुण्ठितामोटा चण्डखण्डा गणाबला ।
शुक्ला स्रष्ट्रीवशा ज्ञानिमानी लीलालका शची ॥ १४७ ॥

सूरचन्द्रघृणिर्योषावीर्याक्रीडा रसावहा ।
नूत्रा सोमा महाराज्ञी गयायागाहुतप्रभा ॥ १४८ ॥

धूर्ता सुधाघनालीनपुष्टिमृष्टसुधाकरा ।
करिणी कामिनी मुक्तामणिश्रेणी फणीश्वरा १४९ ॥

तार्क्षी सूक्ष्मा नताचार्या गौरिका गिरिजाङ्गना ।
इन्द्रजाला चेन्दुमुखी त्विन्द्रोपेन्द्रादिसंस्तुता ॥ १५० ॥

शिवदूती च गरलशितिकण्ठकुटुंबिनी ।
ज्वलन्तीज्वलनाकारा ज्वलज्जाज्वल्य जंभदा ॥ १५१ ॥

ज्वालाशया ज्वालमणिर्ज्योतिषां गतिरेव हि ।
ज्योतिः शास्त्रानुमेयात्मा ज्योतिषि ज्वलितोज्वला ॥ १५२ ॥

ज्योतिष्मती दुर्गवासि ज्योत्स्नाभा ज्वलनार्चिता ।
लंकारी ललितावासा ललितालालितात्मिका ॥ १५३ ॥

लंकाधिपा लास्यलोला लयभोगमयालया ।
लावण्यशालिनी लोला लाङ्गला ललिताम्बिका ॥ १५४ ॥

लाञ्छना लंपटालंघ्या लकुलार्णवमुक्तिदा ।
ललाटनेत्रा लज्जाढ्या लास्यालापमुदाकरा ॥ १५५ ॥

ज्वालाकृतिर्ज्वलद्बीजा ज्योतिर्मण्डलमध्यगा।
ज्योतिस्स्तंभा ज्वलद्वीर्या ज्वलन्मन्त्रा ज्वलत्फला ॥ १५६ ॥

जुषिरा जुंपटा ज्योतिर्मालिका ज्योतिकास्मिता।
ज्वलद्वलय हस्ताब्जा जलत्प्रज्वलकोज्ज्वला ॥ १५७ ॥

ज्वालमाल्या जगज्ज्वाला ज्वलज्ज्वलनसज्वला।
लंबीजा लेलिहानात्मा लीलाक्लिन्ना लयावहा ॥ १५८ ॥

लज्जावती लब्धपुत्री लाकिनी लोलकुण्डला।
लब्धभाग्या लब्धकामा लब्धधीर्लब्धमङ्गला ॥ १५९ ॥

लब्धवीर्या लब्धवृता लाभा लब्धविनाशिनी।
लसद्वस्त्रा लसत्पीडा लसन्माल्या लसत्प्रभा ॥ १६० ॥

शूलहस्ता शूरसेव्या शूलिनी शूलनाशिनी।
शूंकृत्यनुमतिः शूर्पशोभना शूर्पधारिणी ॥ १६१ ॥

शूलस्था शूरचित्तस्था शूला शूक्लसुरार्चिता।
शुक्लपद्मासनारुढा शुक्ला शुक्लांबरांशुका ॥ १६२ ॥

शुकलालितहस्ताब्जा श्वेता शुकनुता शुभा।
ललिताक्षरमन्त्रस्था लिप्तकुङ्कुमभासुरा ॥ १६३ ॥

लिपिरूपा लिप्तभस्मा लिप्तचन्दनपंकिला।
लीलाभाषणसंलोला लीनकस्तूरिकाद्रवा ॥ १६४ ॥

लिखितांबुजचक्रस्था लिख्यालिखित वैभवा।
नीलालका नीतिमती नीतिशास्त्रस्वरूपिणी ॥ १६५ ॥

नीचघ्नी निष्कला नित्या नीलकण्ठ प्रियाङ्गना।
निराशा निर्गुणातीता निर्मदा निरुपप्लवा ॥ १६६ ॥

निर्णीता निर्मला निष्ठा निरंकुशपराक्रमा।
निर्विण्णदानव बला निश्शेषीकृततारका ॥ १६७ ॥

निरञ्जनकरामन्त्री निर्विघ्नपरनाशिनी ।
नित्यक्लिन्ना निराहारा नीवीनीलांबराश्चिता ॥ १६८ ॥

निशाचरकुलध्वंसी नित्यानन्दपरंपरा ।
निम्बप्रिया निरावेशा निन्दितासुरसुन्दरी ॥ १६९ ॥

निर्घोषा निगलाकृष्टकृत्तिज्वालावृताङ्गणा ।
नीरसा नित्यकल्याणी निरन्तरसुखप्रदा ॥१७० ॥

निर्लोभा नीतिमत्प्रीता निर्विघ्ना निमिषापहा ।
दुंबीजा दुष्टसंहारी दुर्मदा दुरितापहा ॥ १७१ ॥

दुरुत्सह महावीर्या दुर्मेधोत्सवनाशिनी ।
दुर्मांसभक्षिणी दुष्टा दूरीकृतनिशाचरा ॥ १७२ ॥

दूती दुष्टग्रहमद चुंबी दुर्बलरक्षकी ।
ष्टङ्कारी ष्टंमयी ष्टंभा ष्टंबीजा ष्टंभकीलका ॥ १७३ ॥

ग्रहेश्वरी ग्रहाराध्या ग्रहणीरोगमोचिनी ।
ग्रहावेशकरी ग्राह्या ग्रहग्रामाभिरक्षिणी ॥ १७४ ॥

ग्रामौषधमहावीर्या ग्राम्यसर्वभयापहा ।
ग्रहद्वेषी ग्रहारुढा ग्रामणीर्ग्रामदेवता ॥ १७५ ॥

गृहीतब्रह्ममुख्यास्त्रा गृहीतायुधशक्तिदा ।
ग्रासमांसा गृहस्थार्च्या ग्रहभूतनिवारिणी ॥ १७६ ॥

हंभूता हलधृक्सेव्या हारहारिकुचाश्चला ।
हर्षप्रदा हराराध्या हासनिन्द्यनिशाकरा ॥ १७७ ॥

हविर्भोक्त्री हरिद्राभा हरिताश्वाधिरोहिणी ।
हरित्पतिसमाराध्या हलाकृष्टसुरासुरा ॥ १७८ ॥

हारीतशुकवत्पाणिः हयमेधाभिरक्षकी ।
हंसाक्षरी हंसबीजा हाहाकार हराशुगा ॥ १७९ ॥

हय्यंगवीन हृद्वृत्तिः हारीतांशुमणिद्युतिः ।
हुंकारात्मा हुताहोम्या हुंकारालयनायिका ॥ १८० ॥

हुंकारपञ्जरशुकी हुंकारकमलेन्दिरा ।
हुंकाररात्रिकाज्योत्स्ना हुंकारद्रुममञ्जरी ॥ १८१ ॥

हुंकारदीपिकाज्वाला हुंकारार्णवकौमुदी ।
हुंफट्करी हुंफट्द्युतिः हुंकाराकाशभास्करा ॥ १८२ ॥

फट्कारी स्फाटिकाकारा स्फटिकाक्षकरांबुजा ।
फट्कीलका फडस्त्राच फट्काराहि शिखामणिः ॥ १८३ ॥

फट्कारसुमनोमाध्वी फट्कारकमलेन्दिरा ।
फट्कारसौधशृङ्गस्था फट्काराध्वरदक्षिणा ॥ १८४ ॥

फट्कारशुक्तिकामुक्ता फट्कारद्रुममञ्जरी ।
फट्कारवीरखड्गास्त्रा फट्कारतनुमध्यगा ॥ १८५ ॥

फट्कारशिबिकारुढा फट्कारच्छत्र लाञ्छिता ।
फट्कारपीठनिलया फट्कारवृतमण्डला ॥ १८६ ॥

फट्कारकुञ्जरमदप्रवाहा फाललोचना ।
फलाशिनी फलकरी फलदानपरायणा ॥ १८७ ॥

फट्कारास्त्रफलाकारा फलन्ती फलवर्जिता ।
स्वातन्त्र्यचरिता स्वस्था स्वप्नग्रहनिषूदनी ॥ १८८ ॥

स्वाधिष्ठनांबुजारूढा स्वयंभूता स्वरात्मिका ।
स्वर्गाधिपा स्वर्णवर्णा स्वाहाकारस्वरूपिणी ॥ १८९ ॥

स्वयंवरा स्वरारोहा स्वप्रकाशा स्वरप्रिया ।
स्वचक्रराजनिलया स्वसैन्यविजयप्रदा ॥ १९० ॥

स्वप्रधाना स्वापकारी स्वकृताखिलवैभवा ।
स्वैरिणीखेदशमनी स्वरूपजितमोहिनी ॥ १९१ ॥

हानोपादाननिर्मुक्ता हानिदौघनिरासना ।
हस्तिकुंभद्वयकुचा हस्तिराजाधिरोहिणी ॥ १९२ ॥

हयग्रीवसमाराध्या हस्तिकृत्तिप्रियाङ्गना ।
हालीकृतस्वरकुला हानिवृद्धिविवर्जिता ॥ १९३ ॥

हाहाहूहूमुखस्तुत्या हठदानितकृत्तिका ।
हतासुरा हतद्वेषा हाटकाद्रिगुहागृहा ॥ १९४ ॥

हल्लीनटनसन्तुष्टा हरिगह्वरवल्लभा ।
हनुमद्गीतसङ्गीत हासिता हरिसोदरी ॥ १९५ ॥

हकारकन्दरासिंही हकारकुसुमासवा ।
हकारतटिनीपूरा हकारजलपङ्कजा ॥ १९६ ॥

हकारयामिनी ज्योत्स्ना हकारखजितारसा ।
हकारचक्रवालार्का हकारमरुदीधितिः ॥ १९७ ॥

हकारवासरङ्गी च हकारगिरिनिर्झरा।
हकारमधुमाधुर्या हकाराश्रमतापसी ॥ १९८ ॥

हकारमधुवासन्ती हकारस्वरकाहली ।
हकारमन्त्रबीजार्णा हकारपटहध्वनिः ॥ १९९ ॥

हकारनारीलावण्या हकारपरदेवता ॥ २०० ॥

नमो वेदान्तरूपायै दुर्गादेव्यै नमो नमः ।
नमो भक्तानुकंपायै दुर्गे श्रीपरदेवते ॥
नमो नमो भगवति त्राहि मामपराधिनम् ॥

सर्वपापापहं मुख्यं सर्वमङ्गलदायकम् ।
सर्वसंपत्करं पुण्यं स्वर्गमोक्ष सुखप्रदम् ॥

पठतां शृण्वतां चात्र पुत्रपौत्रप्रदं शुभम् ।
सहस्रनामकं श्रेष्ठं दुर्गायाः कामदं परम् ॥

# श्रीसरस्वतीध्यानम्

वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्काङ्कितमस्तकां निजकरैः संबिभ्रतीं आदरात्।
वीणामक्षगुणां सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं
दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ १ ॥

आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं
बिभ्राणा तरुणेन्दुबद्धमकुटा मुक्तेन्दुकुन्दप्रभा।
भालोन्मीलितलोचना कुचभराक्रान्ता भवद्भूतये
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानाऽनिशम् ॥ २ ॥

या कुन्देन्दु तुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ ३ ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिनिभैरक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ४ ॥

सुरासुरासेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका।
विरिञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा ॥ ५ ॥

सरस्वती सरसिजकेसरप्रभा तपस्विनी सितकमलासनप्रिया।
घनस्तनी कमलविलोललोचना मनस्विनी भवतु वरप्रसादिनी ॥ ६ ॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि।
विद्यारंभं करिष्यामि सिद्धिर्भवतु मे सदा ॥ ७ ॥

श्रीमच्चन्दनचर्चितोज्ज्वलवपुः शुक्लाम्बरा मल्लिका-
मालालालितकुन्तला प्रविलसन्मुक्तावलीशोभना ।
सर्वज्ञाननिधानपुस्तकधरा रुद्राक्षमालाङ्किता
वाग्देवी वदनाम्बुजे वसतु मे त्रैलोक्यमाता शुभा ॥ ८ ॥

॥ श्रीरस्तु ॥

## ॥ श्रीसरस्वतीशतनामस्तोत्रम् ॥

सरस्वती महाभद्रा महामाया वरप्रदा ।
श्रीप्रदा पद्मनिलया पद्माक्षी पद्मवक्त्रका ॥ १ ॥

शिवानुजा पुस्तकभृत् ज्ञानमुद्रा रमा परा ।
कामरूपा महाविद्या महापातकनाशिनी ॥ २ ॥

महाश्रया मालिनी च महाभोगा महाभुजा ।
महाभागा महोत्साहा दिव्याङ्गा सुरवन्दिता ॥ ३ ॥

महाकाली महापाशा महाकारा महाङ्कुशा ।
पीता च विमला विश्वा विद्युन्माला च वैष्णवी ॥ ४ ॥

चन्द्रिका चन्द्रवदना चन्द्रलेखाविभूषिता ।
सावित्री सुरसा देवी दिव्यालङ्कारभूषिता ॥ ५ ॥

वाग्देवी वसुदा तीव्रा महाभद्रा महाबला ।
भोगदा भारती भामा गोविन्दा गोमती शिवा ॥ ६ ॥

जटिला विन्ध्यवासा च विन्ध्याचलविराजिता ।
चण्डिका वैष्णवी ब्राह्मी ब्रह्मज्ञानैकसाधना ॥ ७ ॥

सौदामिनी सुधामूर्तिस्सुभद्रा सुरपूजिता ।
सुवासिनी सुनासा च विनिद्रा पद्मलोचना ॥ ८ ॥

विद्यारूपा विशालाक्षी ब्रह्मजाया महाफला।
त्रयीमूर्तिः त्रिकालज्ञा त्रिगुणा शास्त्ररूपिणी ॥ ९ ॥

शुम्भासुरप्रमथिनी शुभदा च स्वरात्मिका।
रक्तबीजनिहन्त्री च चामुण्डा चाम्बिका तथा ॥ १० ॥

मुण्डकायप्रहरणा धूम्रलोचनमर्दना।
सर्वदेवस्तुता सौम्या सुरासुरनमस्कृता ॥ ११ ॥

कालरात्री कलाधारा रूपसौभाग्यदायिनी।
वाग्देवी च वरारोहा वाराही वारिजासना ॥ १२ ॥

चित्रांबरा चित्रगन्धा चित्रमाल्यविभूषिता।
कान्ता कामप्रदा वन्द्या विद्याधरसुपूजिता ॥ १३ ॥

श्वेतानना नीलभुजा चतुर्वर्गफलप्रदा।
चतुरानन साम्राज्या रक्तमध्या निरञ्जना ॥ १४ ॥

हंसासना नीलजङ्घा ब्रह्मविष्णुशिवात्मिका।
एवं सरस्वतीदेव्या नाम्नामष्टोत्तरं शतम् ॥ १५ ॥

इति सरस्वत्यष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

# श्रीसरस्वतीसहस्रनामस्तोत्रम्

श्रीनारद उवाच—

भगवन्परमेशान सर्वलोकैकनायक ।
कथं सरस्वती साक्षात्प्रसन्ना परमेष्ठिनः ॥ १ ॥

कथं देव्या महावाण्याः स तत्प्राप सुदुर्लभम् ।
एतन्मे वद तत्त्वेन महायोगीश्वर प्रभो ॥ २ ॥

सनत्कुमार उवाच—

साधु पृष्टं त्वया ब्रह्मन् गुह्याद्गुह्यमनुत्तमम् ।
मयानुगोपितं यत्नादिदानीं तत्प्रकाश्यते ॥ ३ ॥

पुरा पितामहो दृष्ट्वा जगत्स्थावरजंगमम् ।
निर्विकारं निराभासं स्तंभीभूतमचेतनम् ॥ ४ ॥

सृष्ट्वा त्रैलोक्यमखिलं वागभावात्तथाविधम् ।
आधिक्याभावतः स्वस्य परमेष्ठी जगद्गुरुः ॥ ५ ॥

दिव्यवर्षायुतं तेने तपो दुष्करमुत्तमम् ।
ततः कदाचित्सञ्जाता वाणी सर्वार्थशोभिता ॥ ६ ॥

अहमस्मि महाविद्या सर्ववाचामधीश्वरी ।
मम नाम्नां सहस्रं तु उपदेक्ष्याम्यनुत्तमम् ॥ ७ ॥

अनेन संस्तुता नित्यं पत्नी तव भवाम्यहम् ।
त्वया सृष्टं जगत्सर्वं वाणीयुक्तं भविष्यति ॥ ८ ॥

इदं रहस्यं परमं मम नामसहस्रकम् ।
सर्वपापौघशमनं महासारस्वतप्रदम् ॥ ९ ॥

महाकवित्वदं लोके वागीशत्वप्रदायकम्।
नत्वा परः पुमान्यस्तु स्तवेनानेन तोषयेत्॥ १०॥

तस्याहं किंकरी साक्षाद्भविष्यामि न संशयः।
इत्युक्त्वान्तर्दधे वाणी तदारभ्य पितामहः॥ ११॥

स्तुत्वा स्तोत्रेण दिव्येन तत्पतित्वमवाप्तवान्।
वाणीयुक्तं जगत्सर्वं तदारभ्याभवन्मुने॥ १२॥

तत्तेऽहं संप्रवक्ष्यामि शृणु यत्नेन नारद।
सावधानमना भूत्वा क्षणं शुद्धो मुनीश्वर॥ १३॥

मन्त्रः—ऐं वद वद वाग्वादिनि स्वाहा॥

वाग्वाणी वरदा वन्द्या वरारोहा वरप्रदा।
वृत्तिर्वागीश्वरी वार्ता वरा वागीशवल्लभा॥ १॥

विश्वेश्वरी विश्ववन्द्या विश्वेशप्रियकारिणी।
वाग्वादिनी च वाग्देवी वृद्धिदा वृद्धिकारिणी॥ २॥

वृद्धिर्वृद्धा विषघ्नी च वृष्टिर्वृष्टिप्रदायिनी।
विश्वाराध्या विश्वमाता विश्वधात्री विनायका॥ ३॥

विश्वशक्तिर्विश्वसारा विश्वा विश्वविभावरी।
वेदान्तवेदिनी वेद्या वित्ता वेदत्रयात्मिका॥ ४॥

वेदज्ञा वेदजननी विश्वा विश्वविभावरी।
वरेण्या वाङ्मयी वृद्धा विशिष्टप्रियकारिणी॥ ५॥

विश्वतोवदना व्याप्ता व्यापिनी व्यापकात्मिका।
व्यालघ्नी व्यालभूषांगी विरजा वेदनायिका॥ ६॥

वेदवेदान्तसंवेद्या वेदान्तज्ञानरूपिणी।
विभावरी च विक्रान्ता विश्वमित्रा विधिप्रिया॥ ७॥

वरिष्ठा विप्रकृष्टा च विप्रवर्यप्रपूजिता।
वेदरूपा वेदमयी वेदमूर्तिश्च वल्लभा॥ ८॥

ॐ ह्रीं गुरुरूपे मां गृह्ण ऐं वद वद वाग्वादिनि स्वाहा॥

गौरी गुणवती गोप्या गंधर्वनगरप्रिया।
गुणमाता गुहान्तस्था गुरुरूपा गुरुप्रिया॥ ९॥

गिरिविद्या गानतुष्टा गायकप्रियकारिणी।
गायत्री गिरिशाराध्या गीर्गिरीशप्रियङ्करी॥ १०॥

गिरिज्ञा ज्ञानविद्या च गिरिरूपा गिरीश्वरी।
गीर्माता गणसंस्तुत्या गणनीयगुणान्विता॥ ११॥

गूढरूपा गुहा गोप्या गोरूपा गौर्गुणात्मिका।
गुर्वी गुर्वंबिका गुह्या गेयजा ग्रहनाशिनी॥ १२॥

गृहिणी गृहदोषघ्नी गवघ्नी गुरुवत्सला।
गृहात्मिका गृहाराध्या गृहबाधाविनाशिनी॥ १३॥

गंगा गिरिसुता गम्या गजयाना गुहस्तुता।
गरुडासनसंसेव्या गोमती गुणशालिनी॥ १४॥

ॐ ऐं नमः शारदे श्रीं शुद्धे नमः शारदे ऐं वद वद वाग्वादिनि स्वाहा॥

शारदा शाश्वती शैवी शांकरी शङ्करात्मिका।
श्रीश्शर्वाणी शतघ्नी च शरच्चन्द्रनिभानना॥ १५॥

शर्मिष्ठा शमनघ्नी च शतसाहस्ररूपिणी।
शिवा शम्भुप्रिया श्रद्धा श्रुतिरूपा श्रुतिप्रिया॥ १६॥

शुचिष्मती शर्मकरी शुद्धिदा शुद्धिरूपिणी।
शिवा शिवंकरी शुद्धा शिवाराध्या शिवात्मिका ॥ १७ ॥

श्रीमती श्रीमयी श्राव्या श्रुतिःश्रवणगोचरा।
शांतिश्शांतिकरी शान्ता शान्ताचारप्रियंकरी ॥ १८ ॥

शीललभ्या शीलवती श्रीमाता शुभकारिणी।
शुभवाणी शुद्धविद्या शुद्धचित्तप्रपूजिता ॥ १९ ॥

श्रीकरी श्रुतपापघ्नी शुभाक्षी शुचिवल्लभा।
शिवेतरघ्नी शबरी श्रवणीयगुणान्विता ॥ २० ॥

शारी शिरीषपुष्पाभा शमनिष्ठा शमात्मिका।
शमान्विता शमाराध्या शितिकंठप्रपूजिता ॥ २१ ॥

शुद्धिः शुद्धिकरी श्रेष्ठा श्रुतानंता शुभावहा।
सरस्वती च सर्वज्ञा सर्वसिद्धिप्रदायिनी ॥ २२ ॥

ॐ ऐं वद वद वाग्वादिनि स्वाहा ॥

सरस्वती च सावित्री संध्या सर्वेप्सितप्रदा।
सर्वार्तिघ्नी सर्वमयी सर्वविद्याप्रदायिनी ॥ २३ ॥

सर्वेश्वरी सर्वपुण्या सर्गस्थित्यंतकारिणी।
सर्वाराध्या सर्वमाता सर्वदेवनिषेविता ॥ २४ ॥

सर्वैश्वर्यप्रदा सत्या सती सत्वगुणाश्रया।
स्वरक्रमपदाकारा सर्वदोषनिषूदिनी ॥ २५ ॥

सहस्राक्षी सहस्रास्या सहस्रपदसंयुता।
सहस्रहस्ता साहस्रगुणालङ्कृतविग्रहा ॥ २६ ॥

सहस्रशीर्षा सद्रूपा स्वधा स्वाहा सुधामयी ।
षड्ग्रंथिभेदिनी सेव्या सर्वलोकैकपूजिता ॥ २७ ॥

स्तुत्या स्तुतिमयी साध्या सवितृप्रियकारिणी ।
संशयच्छेदिनी सांख्यवेद्या संख्या सदीश्वरी ॥ २८ ॥

सिद्धिदा सिद्धसंपूज्या सर्वसिद्धिप्रदायिनी ।
सर्वज्ञा सर्वशक्तिश्च सर्वसंपत्प्रदायिनी ॥ २९ ॥

सर्वाशुभघ्नी सुखदा सुखा संवित्स्वरूपिणी ।
सर्वसंभीषणी सर्वजगत्संमोहिनी तथा ॥ ३० ॥

सर्वप्रियंकरी सर्वशुभदा सर्वमङ्गला ।
सर्वमंत्रमयी सर्वतीर्थपुण्यफलप्रदा ॥ ३१ ॥

सर्वपुण्यमयी सर्वव्याधिघ्नी सर्वकामदा ।
सर्वविघ्नहरी सर्ववंदिता सर्वमंगला ॥ ३२ ॥

सर्वमन्त्रकरी सर्वलक्ष्मीस्सर्वगुणान्विता ।
सर्वानंदमयी सर्वज्ञानदा सत्यनायिका ॥ ३३ ॥

सर्वज्ञानमयी सर्वराज्यदा सर्वमुक्तिदा ।
सुप्रभा सर्वदा सर्वा सर्वलोकवशंकरी ॥ ३४ ॥

सुभगा सुंदरी सिद्धा सिद्धांबा सिद्धमातृका ।
सिद्धमाता सिद्धविद्या सिद्धेशी सिद्धरूपिणी ॥ ३५ ॥

सुरूपिणी सुखमयी सेवकप्रियकारिणी ।
स्वामिनी सर्वदा सेव्या स्थूलसूक्ष्मापरांबिका ॥ ३६ ॥

साररूपा सरोरूपा सत्यभूता समाश्रया ।
सितासिता सरोजाक्षी सरोजासनवल्लभा ॥ ३७ ॥

सरोरुहाभा सर्वांगी सुरेन्द्रादिप्रपूजिता।

ॐ ह्रीं ऐं महासरस्वति महासारस्वतप्रदे ऐं वद वद वाग्वादिनि स्वाहा॥

महादेवी महेशानी महासारस्वतप्रदा॥ ३८॥

महासरस्वती मुक्ता मुक्तिदा मलनाशिनी।
महेश्वरी महानंदा महामंत्रमयी मही॥ ३९॥

महालक्ष्मीर्महाविद्या माता मंदरवासिनी।
मंत्रगम्या मंत्रमाता महामंत्रफलप्रदा॥ ४०॥

महामुक्तिर्महानित्या महासिद्धिप्रदायिनी।
महासिद्धा महामाता महदाकारसंयुता॥ ४१॥

महा महेश्वरी मूर्तिः मोक्षदा मणिभूषणा।
मेनका मानिनी मान्या मृत्युघ्नी मेरुरूपिणी॥ ४२॥

मदिराक्षी मदावासा मखरूपा मखेश्वरी।
महामोहा महामाया मातॄणां मूर्ध्नि संस्थिता॥ ४३॥

महापुण्या मुदावासा महासंपत्प्रदायिनी।
मणिपूरैकनिलया मधुरूपा महोत्कटा॥ ४४॥

महासूक्ष्मा महाशांता महाशांतिप्रदायिनी।
मुनिस्तुता मोहहंत्री माधवी माधवप्रिया॥ ४५॥

मा महादेवसंस्तुत्या महिषीगणपूजिता।
मृष्टान्नदा च माहेन्द्री महेन्द्रपददायिनी॥ ४६॥

मतिर्मतिप्रदा मेधा मर्त्यलोकनिवासिनी।
मुख्या महानिवासा च महाभाग्यजनाश्रिता॥ ४७॥

महिला महिमा मृत्युहारी मेधाप्रदायिनी ।
मेध्या महावेगवती महामोक्षफलप्रदा ॥ ४८ ॥

महाप्रभाभा महती महादेवप्रियंकरी ।
महापोषा महर्द्धिश्च मुक्ताहारविभूषणा ॥ ४९ ॥

माणिक्यभूषणा मन्त्रा मुख्यचंद्रार्धशेखरा ।
मनोरूपा मनश्शुद्धिः मनश्शुद्धिप्रदायिनी ॥ ५० ॥

महाकारुण्यसम्पूर्णा मनोनमनवंदिता ।
महापातकजालघ्नी मुक्तिदा मुक्तभूषणा ॥ ५१ ॥

मनोन्मनी महास्थूला महाक्रतुफलप्रदा ।
महापुण्यफलप्राप्या मायात्रिपुरनाशिनी ॥ ५२ ॥

महानसा महामेधा महामोदा महेश्वरी ।
मालाधरी महोपाया महातीर्थफलप्रदा ॥ ५३ ॥

महामङ्गलसम्पूर्णा महादारिद्र्यनाशिनी ।
महामखा महामेघा महाकाली महाप्रिया ॥ ५४ ॥

महाभूषा महादेहा महाराज्ञी मुदालया ।
ॐ ह्रीं ऐं नमो भगवति ऐं वद वद वाग्वादिनि स्वाहा ॥
भूरिदा भाग्यदा भोग्या भोग्यदा भोगदायिनी ॥ ५५ ॥

भवानी भूतिदा भूतिः भूमिर्भूमिसुनायिका ।
भूतधात्री भयहरी भक्तसारस्वतप्रदा ॥ ५६ ॥

भुक्तिर्भुक्तिप्रदा भेकी भक्तिर्भक्तिप्रदायिनी ।
भक्तसायुज्यदा भक्तस्वर्गदा भक्तराज्यदा ॥ ५७ ॥

भागीरथी भवाराध्या भाग्यसज्जनपूजिता
भवस्तुत्या भानुमती भवसागरतारिणी ॥ ५८ ॥

भूतिर्भूषा च भूतेशी भाललोचनपूजिता ।
भूता भव्या भविष्या च भवविद्या भवात्मिका ॥ ५९ ॥

बाधापहारिणी बन्धुरूपा भुवनपूजिता ।
भवघ्नी भक्तिलभ्या च भक्तरक्षणतत्परा ॥ ६० ॥

भक्तार्तिशमनी भाग्या भोगदानकृतोद्यमा ।
भुजङ्गभूषणा भीमा भीमाक्षी भीमरूपिणी ॥ ६१ ॥

भाविनी भ्रातृरूपा च भारती भवनायिका ।
भाषा भाषावती भीष्मा भैरवी भैरवप्रिया ॥ ६२ ॥

भूतिर्भासितसर्वाङ्गी भूतिदा भूतिनायिका ।
भास्वती भगमाला च भिक्षादानकृतोद्यमा ॥ ६३ ॥

भिक्षुरूपा भक्तिकरी भक्तलक्ष्मीप्रदायिनी ।
भ्रान्तिघ्ना भ्रान्तिरूपा च भूतिदा भूतिकारिणी ॥ ६४ ॥

भिक्षणीया भिक्षुमाता भाग्यवद्दृष्टिगोचरा ।
भोगवती भोगरूपा भोगमोक्षफलप्रदा ॥ ६५ ॥

भोगश्रान्ता भाग्यवती भक्ताघौघविनाशिनी ॥

ॐ ऐं क्लीं सौः बाले ब्राह्मि ब्रह्मपत्नि ऐं वद वद वाग्वादिनि स्वाहा ।
ब्राह्मी ब्रह्मस्वरूपा च बृहती ब्रह्मवल्लभा ॥ ६६ ॥

ब्रह्मदा ब्रह्ममाता च ब्रह्माणी ब्रह्मदायिनी ।
ब्रह्मेशी ब्रह्मसंस्तुत्या ब्रह्मवेद्या बुधप्रिया ॥ ६७

बालेन्दुशेखरा बाला बलिपूजाकरप्रिया।
बलदा बिन्दुरूपा च बालसूर्यसमप्रभा॥ ६८॥

ब्रह्मरूपा ब्रह्ममयी ब्रध्नमण्डलमध्यगा।
ब्रह्माणी बुद्धिदा बुद्धिर्बुद्धिरूपा बुधेश्वरी॥ ६९॥

बन्धक्षयकरी बाधानाशनी बन्धुरूपिणी।
बिन्द्वालया बिन्दुभूषा बिन्दुनादसमन्विता॥ ७०॥

बीजरूपा बीजमाता ब्रह्मण्या ब्रह्मकारिणी।
बहुरूपा बलवती ब्रह्मजा ब्रह्मचारिणी॥ ७१॥

ब्रह्मस्तुत्या ब्रह्मविद्या ब्रह्माण्डाधिपवल्लभा।
ब्रह्मेशविष्णुरूपा च ब्रह्मविष्ण्वीशसंस्थिता॥ ७२॥

बुद्धिरूपा बुधेशानी बन्धी बन्धविमोचनी॥

मन्त्रः— ॐ ह्रीं ऐं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं अक्षमाले अक्षरमालिका समलंकृते वद वद वाग्वादिनि स्वाहा॥

अक्षमालाक्षराकाराऽ क्षराक्षरफलप्रदा॥ ७३॥

अनन्ताऽऽनन्दसुखदाऽनन्तचन्द्रनिभानना।
अनन्तमहिमाऽऽघोरानन्तगंभीरसम्मिता॥ ७४॥

अदृष्टाऽदृष्टदाऽनन्ताऽ दृष्टभाग्यफलप्रदा।
अरुंधत्यव्ययीनाथाऽनेकसद्गुणसंयुता॥ ७५॥

अनेकभूषणाऽदृश्याऽनेकलेखनिषेविता।
अनन्ताऽनन्तसुखदाऽघोराऽघोरस्वरूपिणी॥ ७६॥

अशेषदेवतारूपाऽमृतरूपाऽमृतेश्वरी ।
अनवद्याऽनेकहस्ताऽनेकमाणिक्यभूषणा ॥ ७७ ॥

अनेकविघ्नसंहर्त्री अनेकाभरणान्विता ।
अविद्याऽज्ञानसंहर्त्री ह्यविद्याजालनाशिनी ॥ ७८ ॥

अभिरूपाऽनवद्याङ्गी ह्यप्रतर्क्यगतिप्रदा ।
अकलंकारूपिणी च ह्यनुग्रहपरायणा ॥ ७९ ॥

अंबरस्थांबरमयांबर मालांबुजेक्षणा ।
अंबिकाऽब्जकराऽब्जस्थांशुमत्यंशुशतान्विता ॥ ८० ॥

अंबुजाऽनवराऽखण्डाऽम्बुजासनमहाप्रिया ।
अजरामरसंसेव्याऽ जरसेवितपद्युगा ॥ ८१ ॥

अतुलार्थप्रदाऽर्थैक्याऽत्युदारा त्वभयान्विता ।
अनाथवत्सलाऽनन्तप्रियाऽनन्तेप्सितप्रदा ॥ ८२ ॥

अंबुजाक्ष्यंबुरूपांबुजातोद्भवमहाप्रिया ।
अखण्डा त्वमरस्तुत्याऽमरनायकपूजिता ॥ ८३ ॥

अजेया त्वजसंकाशाऽ ज्ञाननाशिन्यभीष्टदा ।
अक्ताऽघनेना चास्त्रेशी ह्यलक्ष्मीनाशिनी तथा ॥ ८४ ॥

अनन्तसाराऽनन्त श्रीरनन्तविधिपूजिता ।
अभीष्टाऽमर्त्यसम्पूज्या ह्यस्तोदय विवर्जिता ॥ ८५ ॥

आस्तिकस्वान्तनिलयाऽस्त्ररूपाऽस्त्रवती तथा ।
अस्खलत्यस्खलद्रूपाऽस्खलद्विद्याप्रदायिनी ॥ ८६ ॥

अस्खलत्सिद्धिदाऽऽनन्दांबुजा चामरनायिका ।
अमेयाऽशेषपापघ्न्यक्षयसारस्वतप्रदा ॥ ८७ ॥

ॐ ज्यां ह्रीं जयजय जगन्मातः ऐं वद वद वाग्वादिनि स्वाहा ।

जया जयन्ती जयदा जन्मकर्मविवर्जिता ।
जगत्प्रिया जगन्माता जगदीश्वरवल्लभा ॥ ८८ ॥

जातिर्जयाजितामित्रा जप्या जपनकारिणी ।
जीवनी जीवनिलया जीवाख्या जीवधारिणी ॥ ८९ ॥

जाह्नवी ज्या जपवती जातिरूपा जयप्रदा ।
जनार्दनप्रियकरी जोषणीया जगत्स्थिता ॥ ९० ॥

जगज्ज्येष्ठा जगन्माया जीवनत्राणकारिणी ।
जीवातुलतिका जीवजन्मी जन्मनिबर्हणी ॥ ९१ ॥

जाड्यविध्वंसनकरी जगद्योनिर्जयात्मिका ।
जगदानन्दजननी जम्बूश्च जलजेक्षणा ॥ ९२ ॥

जयन्ती जङ्गपूगघ्नी जनितज्ञानविग्रहा ।
जटा जटावती जप्या जपकर्तृप्रियङ्करी ॥ ९३ ॥

जपकृत्पापसंहर्त्री जपकृत्फलदायिनी ।
जपापुष्पसमप्रख्या जपाकुसुमधारिणी ॥ ९४ ॥

जननी जन्मरहिता ज्योतिर्वृत्त्यभिदायिनी ।
जटाजूटनचन्द्रार्धा जगत्सृष्टिकरी तथा ॥ ९५ ॥

जगत्त्राणकरी जाड्यध्वंसकर्त्री जयेश्वरी ।
जगद्बीजा जयावासा जन्मभूर्जन्मनाशिनी ॥ ९६ ॥

जन्मान्त्यरहिता जैत्री जगद्योनिर्जपात्मिका ।
जयलक्षणसम्पूर्णा जयदानकृतोद्यमा ॥ ९७ ॥

जम्भारात्यादिसंस्तुत्या जम्भारिफलदायिनी ।
जगत्त्रयहिता ज्येष्ठा जगत्त्रयवशङ्करी ॥ ९८ ॥

जगत्त्रयांबा जगती ज्वाला ज्वालितलोचना ।
ज्वालिनी ज्वलनाभासा ज्वलन्ती ज्वलनात्मिका ॥ ९९ ॥

जितारातिसुरस्तुत्या जितक्रोधा जितेन्द्रिया ।
जरामरणशून्या च जनित्री जन्मनाशिनी ॥ १०० ॥

जलजाभा जलमयी जलजासनवल्लभा ।
जलजस्था जपाराध्या जनमङ्गलकारिणी ॥ १०१ ॥

ऐं क्लीं सौः कल्याणि कामधारिणि वद वद वाग्वादिनि स्वाहा ।
कामिनी कामरूपा च काम्या कामप्रदायिनी ॥

कमौली कामदा कर्त्री क्रतुकर्मफलप्रदा ।
कृतघ्नघ्नी क्रियारूपा कार्यकारणरूपिणी ॥ १०२ ॥

कञ्जाक्षी करुणारूपा केवलामरसेविता ।
कल्याणकारिणी कान्ता कान्तिदा कान्तिरूपिणी ॥ १०३ ॥

कमला कमलावासा कमलोत्पलमालिनी ।
कुमुद्वती च कल्याणी कान्तिः कामेशवल्लभा ॥ १०४ ॥

कामेश्वरी कमलिनी कामदा कामबन्धिनी ।
कामधेनुः काञ्चनाक्षी काञ्चनाभा कलानिधिः ॥ १०५ ॥

क्रिया कीर्तिकरी कीर्तिः क्रतुश्रेष्ठा कृतेश्वरी ।
क्रतुसर्वक्रियास्तुत्या क्रतुकृत्प्रियकारिणी ॥ १०६ ॥

क्लेशनाशकरी कर्त्री कर्मदा कर्मबन्धिनी ।
कर्मबन्धहरी कृष्टा क्लमघ्नी कञ्जलोचना ॥ १०७ ॥

कन्दर्पजननी कान्ता करुणा करुणावती।
क्लींकारिणी कृपाकारा कृपासिन्धुः कृपावती ॥ १०८ ॥

करुणार्द्रा कीर्तिकरी कल्मषघ्नी क्रियाकरी।
क्रियाशक्तिः कामरूपा कमलोत्पलगन्धिनी ॥ १०९ ॥

कला कलावती कूर्मी कूटस्था कञ्जसंस्थिता।
कालिका कल्मषघ्नी च कमनीयजटान्विता ॥ ११० ॥

करपद्मा कराभीष्टप्रदा क्रतुफलप्रदा।
कौशिकी कोशदा काव्या कर्त्री कोशेश्वरी कृशा ॥ १११ ॥

कूर्मयाना कल्पलता कालकूटविनाशिनी
कल्पोद्यानवती कल्पवनस्था कल्पकारिणी ॥ ११२ ॥

कदम्बकुसुमाभासा कदम्बकुसुमप्रिया।
कदम्बोद्यानमध्यस्था कीर्तिदा कीर्तिभूषणा ॥ ११३ ॥

कुलमाता कुलावासा कुलाचारप्रियंकरी।
कुलानाथा कामकला कलानाथा कलेश्वरी ॥ ११४ ॥

कुन्द-मन्दारपुष्पाभा कपर्दस्थितचन्द्रिका।
कवित्वदा काव्यमाता कविमाता कलाप्रदा ॥ ११५ ॥

ॐ सौः क्लीं ऐं वद वद वाग्वादिनि स्वाहा।
तरुणी तरुणी ताता ताराधिपसमानना।
तृप्तिस्तृप्तिप्रदा तर्क्या तपनी तापिनी तथा ॥ ११६ ॥

तर्पणी तीर्थरूपा च त्रिदशा त्रिदशेश्वरी।
त्रिदिवेशी त्रिजननी त्रिमाता त्र्यंबकेश्वरी ॥ ११७ ॥

त्रिपुरा त्रिपुरेशानी त्र्यंबका त्रिपुरांबिका।
त्रिपुरश्रीस्त्रयीरूपा त्रयीवेद्या त्रयीश्वरी ॥ ११८ ॥

त्र्यन्तवेदिनी ताम्रा तापत्रितयहारिणी ।
तमालसदृशी त्राता तरुणादित्यसन्निभा ॥ ११९ ॥

त्रैलोक्यव्यापिनी तृप्ता तृप्तिकृत्तत्वरूपिणी ।
तुर्या त्रैलोक्यसंस्तुत्या त्रिगुणा त्रिगुणेश्वरी ॥ १२० ॥

त्रिपुरघ्नी त्रिमाता च त्र्यम्बका त्रिगुणान्विता ।
तृष्णाच्छेदकरी तृप्ता तीक्ष्णा तीक्ष्णस्वरूपिणी ॥ १२१ ॥

तुला तुलादिरहिता तत्तद्ब्रह्मस्वरूपिणी ।
त्राणकर्त्री त्रिपापघ्नी त्रिपदा त्रिदशान्विता ॥ १२२ ॥

तथ्या त्रिशक्तिस्त्रिपदा तुर्या त्रैलोक्यसुन्दरी ।
तेजस्करी त्रिमूर्त्याद्या तेजोरूपा त्रिधा मता ॥ १२३ ॥

त्रिचक्रकर्त्री त्रिभगा तुर्यातीतफलप्रदा ।
तेजस्विनी तापहारी तापोपप्लवनाशिनी ॥ १२४ ॥

तेजोगर्भा तपस्सारा त्रिपुरारिप्रियङ्करी ।
तन्वी तापससन्तुष्टा तपनांगजभीतिनुत् ॥ १२५ ॥

त्रिलोचना त्रिमार्गा च तृतीया त्रिदशस्तुता ।
त्रिसुन्दरी त्रिपथगा तुरीयपददायिनी ॥ १२६ ॥

ॐ ह्रीं श्रीं क्लीं ऐं नमश्शुद्धफलदे ऐं वद वद वाग्वादिनि स्वाहा ।
शुभा शुभावती शान्ता शान्तिदा शुभदायिनी ।
शीतला शूलिनी शीता श्रीमती च शुभान्विता ॥ १२७ ॥

ॐ ऐं यां यीं यूं यैं यौं यः ऐं वद वद वाग्वादिनि स्वाहा ।

योगसिद्धिप्रदा योग्या यज्ञेन परिपूरिता ।
यज्या यज्ञमयी यज्ञी यक्षिणी यक्षिवल्लभा ॥ १२८ ॥

यज्ञप्रिया यज्ञपूज्या यज्ञतुष्टा यमस्तुता।
यामिनीयप्रभा याम्या यजनीया यशस्करी॥ १२९॥

यज्ञकर्त्री यज्ञरूपा यशोदा यज्ञसंस्तुता।
यज्ञेशी यज्ञफलदा योगयोनिर्यजुस्स्तुता॥ १३०॥

यमिसेव्या यमाराध्या यमिपूज्या यमीश्वरी।
योगिनी योगरूपा च योगकर्तृप्रियङ्करी॥ १३१॥

योगयुक्ता योगमयी योगयोगीश्वरांबिका।
योगज्ञानमयी योनिः यमाद्यष्टाङ्गयोगता॥ १३२॥

यन्त्रिताघौघसंहारा यमलोकनिवारिणी।
यष्टिव्यष्टीश संस्तुत्या यमाद्यष्टाङ्गयोगयुक्॥ १३३॥

योगीश्वरी योगमाता योगसिद्धा च योगदा।
योगारूढा योगमयी योगरूपा यवीयसी॥ १३४॥

यन्त्ररूपा च यन्त्रस्था यन्त्रपूज्या च यन्त्रिता।
युगकर्त्री युगमयी युगधर्मविवर्जिता॥ १३५॥

यमुना यमिनी याम्या यमुनाजलमध्यगा।
यातायातप्रशमनी यातनानां निकृन्तनी॥ १३६॥

योगावासा योगिवन्द्या यत्तच्छब्दस्वरूपिणी।
योगक्षेममयी यन्त्रा यावदक्षरमातृका॥ १३७॥

यावत्पदमयी यावच्छब्दरूपा यथेश्वरी।
यत्तदीया यक्षवन्द्या यद्विद्या यतिसंस्तुता॥ १३८॥

यावद्विद्यामयी यावद्विद्यावृन्दसुवंदिता।
योगिहृत्पद्मनिलया योगिवर्यप्रियंकरी॥ १३९॥

योगिवन्द्या योगिमाता योगीशफलदायिनी ।
यक्षवंद्या यक्षपूज्या यक्षराजसुपूजिता ॥ १४० ॥

यज्ञरूपा यज्ञतुष्टा यायजूकस्वरूपिणी ।
यन्त्राराध्या यन्त्रमध्या यन्त्रकर्तृ प्रियङ्करी ॥ १४१ ॥

यन्त्रारूढा यन्त्रपूज्या योगिध्यानपरायणा ।
यजनीया यमस्तुत्या योगयुक्ता यशस्करी ॥ १४२ ॥

योगबद्धा यतिस्तुत्या योगज्ञा योगनायकी ।
योगिज्ञानप्रदा यक्षी यमबाधाविनाशिनी ॥ १४३ ॥

योगिकाम्यप्रदात्री च योगिमोक्षप्रदायिनी ।
इति नाम्नां सरस्वत्याः सहस्रं समुदीरितम् ॥ १४४ ॥

मन्त्रात्मकं महागोप्यं महासारस्वतप्रदम् ।
यः पठेच्छृणुयाद्भक्त्या त्रिकालं साधकः पुमान् ॥ १४५ ॥

सर्वविद्यानिधिस्साक्षात् स एव भवति ध्रुवम् ।
लभते सम्पदस्सर्वाः पुत्रपौत्रादिसंयुताः ॥ १४६ ॥

मूकोऽपि सर्वविद्यासु चतुर्मुख इवापरः ।
भूत्वा प्राप्नोति सान्निध्यं अन्ते धातुर्मुनीश्वर ॥ १४७ ॥

सर्वमन्त्रमयं सर्वविद्यामानफलप्रदम् ।
महाकवित्वदं पुंसां महासिद्धिप्रदायकम् ॥ १४८ ॥

कस्मैचिन्न प्रदातव्यं प्राणैः कण्ठगतैरपि ।
महारहस्यं सततं वाणीनामसहस्रकम् ।
सुसिद्धमस्मदादीनां स्तोत्रं ते समुदीरितम् ॥ १४९ ॥

॥ सरस्वतीसहस्रनामस्तोत्रं सम्पूर्णम् ॥

# श्री बाला ध्यानम्

रक्ताम्बरां चन्द्रकलावतंसां
समुद्यदादित्यनिभां त्रिनेत्राम् ।
विद्याक्षमालाभयदानहस्तां
ध्यायामि बालामरुणांबुजस्थाम् ॥

पाशाङ्कुशौ पुस्तकमक्षसूत्रं
करैर्दधाना सकलामरार्च्या ।
रक्ता त्रिनेत्रा शशिशेखरेयं
ध्येयाऽखिलर्द्ध्यै त्रिपुराऽत्र बाला ॥

मातुलिङ्गपयोजन्महस्तां कनकसन्निभाम् ।
पद्मासनगतां बालां लक्ष्मीप्राप्त्यै विचिन्तये ॥
वरपीयूषकलशपुस्तकाभीतिधारिणीम् ।
सुधां स्रवन्तीं ज्ञानाप्त्यै ब्रह्मरन्ध्रे विचिन्तये ॥
शुक्लांबरां शशाङ्काभां रोगनाशे भजे शिवाम् ।
सृणि पाशधरां देवीं रत्नालङ्कारभूषिताम् ।
प्रसन्नामरुणां वन्दे वशीकरणसिद्धिदाम् ॥

वाग्बीजमूर्तिध्यानम्—

विद्याक्षमालासुकपालमुद्रा-
राजत्करां कुन्दसमानकान्तिम् ।
मुक्ताफलालङ्कृतिशोभिताङ्गीं
बालां भजे वाङ्मयसिद्धिहेतोः ॥

कामबीजमूर्तिध्यानम्—

भजे कल्पवृक्षाध उद्दीप्तरत्ना-
सने सन्निषण्णां मदाघूर्णिताक्षीम् ।
करैर्बीजपूरं कपालेषुचापं
सपाशाङ्कुशं रक्तवर्णां दधानाम् ॥

शक्तिबीजमूर्तिध्यानम्—

व्याख्यानमुद्रामृतकुंभविद्यां
अक्षस्रजं सन्दधतीं कराग्रैः ।
चिद्रूपिणीं शारदचन्द्रकान्तिं
बालां भजे मौक्तिकभूषिताङ्गीम् ॥

## श्री बालाष्टोत्तरशतनामस्तोत्रम्

कल्याणी त्रिपुरा बाला माया त्रिपुरसुन्दरी ।
सुन्दरी सौभाग्यवती क्लींकारी सर्वमङ्गला ॥ १

ह्रींकारी स्कन्दजननी परा पञ्चदशाक्षरी ।
त्रिलोकी मोहनाधीशा सर्वेशी सर्वरूपिणी ॥ २

सर्वसंक्षोभिणी पूर्णा नवमुद्रेश्वरी शिवा ।
अनङ्गकुसुमा ख्याता ह्यनङ्गभुवनेश्वरी ॥ ३

जप्या स्तव्या श्रुतिर्नित्या नित्यक्लिन्नामृतोद्भवा ।
मोहिनी परमानन्दा कामेशी तरुणी कला ॥ ४

कलावती भगवती पद्मरागकिरीटिनी ।
सौगन्धिनी सरिद्वेणी मन्त्रिणी मंत्ररूपिणी ॥ ५

तत्वत्रयी तत्वमयी सिद्धा त्रिपुरवासिनी ।
श्रीर्मतिश्च महादेवी कालिनी परदेवता ॥ ६

कैवल्यरेखा वशिनी सर्वेशी सर्वमातृका ।
विष्णुष्वसा देवमाता सर्वसम्पत्प्रदायिनी ॥ ७

आधारा हितपत्नीका स्वाधिष्ठानसमाश्रया
आज्ञापद्मासनासीना विशुद्धस्थलसंस्थिता ॥ ८

अष्टत्रिंशत्कलामूर्तिः सुषुम्ना चारुमध्यमा ।
योगीश्वरी मुनिध्येया परब्रह्मस्वरूपिणी ॥ ९

चतुर्भुजा चन्द्रचूडा पुराण्यागमरूपिणी ।
ओंकारादिर्महाविद्या महाप्रणवरूपिणी ॥ १०

भूतेश्वरी भूतमयी पञ्चाशद्वर्णरूपिणी ।
षोढान्यासमहाभूषा कामाक्षी दलमातृका ॥ ११

आधारशक्तिस्तरुणी लक्ष्मीश्श्रीपुरभैरवी ।
त्रिकोणमध्यनिलया षट्कोणपुरवासिनी ॥ १२

नवकोणपुरावासा बिन्दुस्थलसमन्विता ।
अघोरा मन्त्रितपदा भामिनी भवरूपिणी ॥ १३

एषा संकर्षिणी धात्री चोमा कात्यायनी शिवा ।
सुलभा दुर्लभा शास्त्री महाशास्त्री शिखण्डिनी ॥ १४

नाम्नामष्टोत्तरशतं पठेन्न्यासससमन्वितम् ।

इति श्रीरुद्रयामळे उमामहेश्वरसंवादे बालाष्टोत्तरशतनामस्तोत्रम् ॥

## ।। श्री बालासहस्रनामस्तोत्रम् ।।

श्रीदेव्युवाच—

भगवन्भाषिताशेषसिद्धान्त करुणानिधे ।
देव्यास्त्रिपुरसुन्दर्याः मन्त्रनामसहस्रकम् ।। १

श्रुत्वा धारयितुं देव ममेच्छा वर्ततेऽधुना ।
कृपया केवलं नाथ तन्ममाख्यातुमर्हसि ।। २

ईश्वर उवाच—

मन्त्रनामसहस्रं ते कथयामि वरानने ।
गोपनीयं प्रयत्नेन शृणु तत्त्वं महेश्वरि ! ।। ३

अस्य श्रीबालात्रिपुरसुन्दरीदिव्यसहस्रनामस्तोत्र महामन्त्रस्य ईश्वर ऋषिः, अनुष्टुप्छन्दः, श्रीबाला त्रिपुरसुन्दरी देवता, ऐं बीजं, सौः शक्तिः क्लीं कीलकं, श्रीबालात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः ।।

ध्यानम्—

ऐंकारासनगर्भितानलशिखां सौः क्लीं कला बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतान्तरङ्गोज्ज्वलाम् ।
वन्दे पुस्तकपाशसांकुशजपस्रग्भासुरोद्यत्करां
तां बालां त्रिपुरां भजे त्रिनयनां षट्चक्रसञ्चारिणीम् ।। ४

ओं सुभगा सुन्दरी सौम्या सुषुम्ना सुखदायिनी ।
मनोज्ञा सुमनो रम्या शोभना ललिता शिवा ।। ५

कान्ता कान्तिमती कान्तिः कामदा कमलालया ।
कल्याणी कमला हृद्या पेशला हृदयङ्गमा ।। ६

सुभद्राख्याऽतिरमणी सर्वा साध्वी सुमङ्गला ।
रामा भव्यवती भव्या कमनीयातिकोमला ॥ ७

शोभाऽभिरामा रमणी रमणीया रतिप्रिया ।
मनोन्मनी महामाया मातङ्गी मदिराप्रिया ॥ ८

महालक्ष्मीर्महाशक्तिर्महाविद्यास्वरूपिणी ।
महेश्वरी महानन्दा महानन्दविधायिनी ॥ ९

मानिनी माधवी माध्वी मदरूपा मदोत्कटा ।
आनन्दकन्दा विजया विश्वेशी विश्वरूपिणी ॥ १०

सुप्रभा कौमुदी शान्ता बिन्दुनादस्वरूपिणी ।
कामेश्वरी कामकला कामिनी कामवर्धिनी ॥ ११

भेरुण्डा चण्डिका चण्डी चामुण्डी मुण्डमालिनी ।
अणुरूपा महारूपा भूतेशी भुवनेश्वरी ॥ १२

चित्रा विचित्रा चित्राङ्गी हेमगर्भस्वरूपिणी ।
चैतन्यरूपिणी नित्या नित्यानित्यस्वरूपिणी ॥ १३

ह्रींकारी कुण्डली धात्री विधात्री भूतसम्प्लवा ।
उन्मादिनी महामाली सुप्रसन्ना सुरार्चिता ॥ १४

परमानन्दनिष्यन्दा परमार्थस्वरूपिणी ।
योगीश्वरी योगमाता हंसिनी कलहंसिनी ॥ १५ .

कला कलावती रक्ता सुषुम्नावर्त्मशालिनी ।
विन्ध्याद्रिनिलया सूक्ष्मा हेमपद्मनिवासिनी ॥ १६

बाला सुरूपिणी माया वरेण्या वरदायिनी ।
विद्रुमाभा विशालाक्षी विशिष्टा विश्वनायिका ॥ १७

वीरेन्द्रवन्द्या विश्वात्मा विश्वा विश्वादिवर्धनी ।
विश्वोत्पत्तिर्विश्वमाया विश्वाराध्या विकस्वरा ॥ १८

मदस्विन्ना मदोद्भिन्ना मानिनी मानवर्धनी ।
मालिनी मोदिनी मान्या मदहस्ता मदालया ॥ १९

मदनिष्यन्दिनी माता मदिराक्षी मदालसा ।
मदात्मिका मदावासा मधुबिन्दुकृताधरा ॥ २०

मूलभूता महामूला मूलाधारस्वरूपिणी ।
सिन्दूररक्ता रक्ताक्षी त्रिनेत्रा त्रिगुणात्मिका ॥ २१

वशिनी वाशिनी वाणी वारुणी वारुणीप्रिया ।
अरुणा तरुणार्काभा भामिनी बह्निवासिनी ॥ २२

सिद्धा सिद्धेश्वरी सिद्धिस्सिद्धाम्बा सिद्धमातृका ।
सिद्धार्थदायिनी विद्या सिद्धाढ्या सिद्धसम्मता ॥ २३

वाग्भवा वाक्प्रदा वन्द्या वाङ्मयी वादिनी परा ।
त्वरिता सत्वरा तुर्या त्वरयित्री त्वरात्मिका ॥ २४

कमला कमलावासा सकला सर्वमङ्गला ।
भगोदरी भगक्लिन्ना भगिनी भगमालिनी ॥ २५

भगप्रदा भगानन्दा भगेशी भगनायिका ।
भगात्मिका भगावासा भगा भगनिपातिनी ॥ २६

भगावहा भगाराध्या भगाढ्या भगवाहिनी ।
भगनिष्यन्दिनी भर्गा भगाभा भगगर्भिणी ॥ २७

भगादिर्भगभोगादिः भगवेद्या भगोद्भवा ।
भगमाता भगाभोगाऽभगवेद्याऽभगोद्भवा ॥ २८

भगमाता भगाकारा भगगुह्या भगेश्वरी।
भगदेहाऽभगावासा भगोद्भेदा भगालसा॥ २९

भगविद्या भगक्लिन्ना भगलिङ्गा भगद्रवा।
सकला निष्कला काली कराली कलभाषिणी॥ ३०

कमला हंसिनी काला करुणा करुणावती।
भास्वरा भैरवी भासा भद्रकाली कुलाङ्गना। ३१

रसात्मिका रसावासा रसस्यन्दा रसावहा।
कामनिष्यन्दिनी काम्या कामिनी कामदायिनी॥ ३२

विद्या विधात्री विविधा विश्वधात्री विधाविधा।
सर्वाङ्गसुन्दरी सौम्या लावण्यसरिदम्बुधिः॥ ३३

चतुराङ्गी चतुर्बाहुश्चतुरा चारुहंसिनी।
मन्त्रा मन्त्रमयी माता मणिपूरसमाश्रया॥ ३४

मन्त्रात्मिका मन्त्रमाता मन्त्रगम्या सुमन्त्रिका।
पुष्पबाणा पुष्पजैत्री पुष्पिणी पुष्पवर्धनी॥ ३५

वज्रेश्वरी वज्रहस्ता पुराणी पुरवासिनी।
तारा सुतरुणी तारा तरुणीताररूपिणी॥ ३६

इक्षुचापा महापाशा शुभदा प्रियवादिनी।
सर्वदा सर्वजननी सर्वार्था सर्वपावनी॥ ३७

आत्मविद्या महाविद्या ब्रह्मविद्या विवस्वती।
शिवेश्वरी शिवाराध्या शिवनाथा शिवात्मिका॥ ३८॥

आत्मिका ज्ञाननिलया निर्भेदा निर्वृतिप्रदा।
निर्वाणरूपिणी नित्या नियमा निष्कला प्रभा॥ ३९

श्रीफला श्रीप्रदा शिष्या श्रीमयी शिवरूपिणी ।
परा कुण्डलिनी कुब्जा कुटिला कुटिलालका ॥ ४०

महोदया महारूपा महामाया कलामयी ।
वशिनी सर्वजननी चित्रवासा विचित्रका ॥ ४१

सूर्यमण्डलमध्यस्था स्थिरा शङ्करवल्लभा ।
सुरभिस्सुमनस्सूर्या सुषुम्ना सोमभूषणा ॥ ४२

सुधाप्रदा सुधाधारा सुश्रीस्सम्पत्तिरूपिणी ।
अमृता सत्यसङ्कल्पा सत्या षड्ग्रन्थिभेदिनी ॥ ४३

इच्छाशक्तिर्महाशक्तिः क्रियाशक्तिः प्रियङ्करी ।
लीला लीलालयानन्दा सूक्ष्मबोधस्वरूपिणी ॥ ४४

सकला रसना सारा सारगम्या सरस्वती ।
परा परायणी पद्मा परनिष्ठा परापरा ॥ ४५

श्रीमती श्रीकरी व्योम्नी शिवयोनिः शिवेक्षणा ।
निरानन्दा निराख्येया निर्द्वन्द्वा निर्गुणात्मिका ॥ ४६

बृहती ब्राह्मणी ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी ।
धृतिस्स्मृतिश्श्रुतिर्मेधा श्रद्धा पुष्टिस्स्तुतिर्मतिः ॥ ४७

अद्वयानन्दसम्बोधा वरा सौभाग्यरूपिणी ।
निरामया निराकारा जृम्भिणी स्तम्भिनी रतिः ॥ ४८

बोधिका कमला रौद्री द्राविणी क्षोभिणी मतिः ।
कुचेली कुचमध्यस्था मध्यकूटगतिः प्रिया ॥ ४९

कुलोत्तीर्णा कुलवती बोधा वाग्वादिनी सती ।
उमा प्रियव्रता लक्ष्मीर्वकुळा कुलरूपिणी ॥ ५०

विश्वात्मिका विश्वयोनिः विश्वासक्ता विनायका ।
ध्यायिनी नादिनी तीर्था शाङ्करी मन्त्रसाक्षिणी ॥ ५१

सन्मन्त्ररूपिणी हृष्टा शाङ्करी सुरशङ्करी ।
सुन्दराङ्गी सुरावासा सुरवन्द्या सुरेश्वरी ॥ ५२

सुवर्णवर्णा सत्कीर्तिस्सुवर्णा वर्णरूपिणी ।
ललिताङ्गी वरिष्ठा श्रीरस्पन्दा स्पन्दरूपिणी ॥ ५३

शाम्भवी सच्चिदानन्दा सच्चिदानन्दरूपिणी ।
जयिनी विश्वजननी विश्वनिष्ठा विलासिनी ॥ ५४

भ्रूमध्याखिलनिष्पाद्या निर्गुणा गुणवर्धनी ।
हृल्लेखा भुवनेशानी भुवना भुवनात्मिका ॥ ५५

विभूतिर्भूतिदा भूतिः संभूतिर्भूतिकारिणी ।
ईशानी शाश्वती शैवी शर्वाणी शर्मदायिनी ॥ ५६ ॥

भवानी भावगा भावा भावना भावनात्मिका ।
हृत्पद्मनिलया शूरा स्वरावृत्तिस्स्वरात्मिका ॥ ५७

सूक्ष्मरूपा परानन्दा स्वात्मस्था विश्वदा शिवा ।
परिपूर्णा दयापूर्णा मदघूर्णितलोचना ॥ ५८

शरण्या तरुणार्काभा मधुरक्ता मनस्विनी ।
अनन्ताऽनन्तमहिमा नित्यतृप्ता निरञ्जनी ॥ ५९

अचिन्त्या शक्तिचिन्त्यार्था चिन्त्या चिन्त्यस्वरूपिणी ।
जगन्मयी जगन्माता जगत्सारा जगद्भवा ॥ ६०

आप्यायिनी परानन्दा कूटस्थाऽऽवासरूपिणी ।
ज्ञानगम्या ज्ञानमूर्तिः ज्ञापिनी ज्ञानरूपिणी ॥ ६१

खेचरी खेचरीमुद्रा खेचरीयोगरूपिणी।
अनाथनाथा निर्नाथा घोराऽघोरस्वरूपिणी ॥ ६२

सुधाप्रदा सुधाधारा सुधारूपा सुधामयी।
दहरा दहराकाशा दहराकाशमध्यगा ॥ ६३

माङ्गल्या मङ्गला दिव्या महामाङ्गल्यदेवता।
माङ्गल्यदायिनी मान्या सर्वमङ्गलदायिनी ॥ ६४

स्वप्रकाशा महाभासा भामिनी भवरूपिणी।
कात्यायिनी कलावासा पूर्णकामा यशस्विनी ॥ ६५

अर्धावसाननिलया नारायणमनोहरा।
मोक्षमार्गविधानज्ञा विरिंचोत्पत्तिभूमिका ॥ ६६

अनुत्तरा महाराध्या दुष्प्रापा दुरतिक्रमा।
शुद्धिदा कामदा सौम्या ज्ञानदा मानदायिनी ॥ ६७

स्वधा स्वाहा सुधा मेधा मधुरा मधुमन्दिरा।
निर्वाणदायिनी श्रेष्ठा शर्मिष्ठा शारदार्चिता ॥ ६८

सुवर्चला सुराराध्या शुद्धसत्वा सुरार्चिता।
स्तुतिःस्तुतिमयी स्तुत्या स्तुतिरूपा स्तुतिप्रिया ॥ ६९

कामेश्वरी कामवती कामिनी कामरूपिणी।
आकाशगर्भा ह्रींकारी कंकाली कालरूपिणी ॥ ७०

विष्णुपत्नी विशुद्धार्था विश्वरूपेशवन्दिता।
विश्ववेद्या महावीरा विश्वघ्नी विश्वरूपिणी ॥ ७१

कुशलाढ्या शीलवती शैलस्था शैलरूपिणी।
रुद्राणी चण्डी खट्वाङ्गी डाकिनी साकिनी प्रभा ॥ ७२

नित्या निर्वेदखद्वांगी जननी जनरूपिणी ।
तलोदरी जगत्सूत्री जगती ज्वलिनी ज्वली ॥ ७३

साकिनी सारसंहृद्या सर्वोत्तीर्णा सदाशिवा ।
स्फुरन्ती स्फुरिताकारा स्फूर्तिस्स्फुरणरूपिणी ॥ ७४

शिवदूती शिवा शिष्टा शिवज्ञा शिवरूपिणी ।
रागिणी रञ्जनी रम्या रजनी रजनीकरा ॥ ७५

विश्वम्भरा विनीतेष्टा विधात्री विधिवल्लभा ।
विद्योतिनी विचित्रार्था विश्वाद्या विविधाभिधा ॥ ७६

विश्वाक्षरा सरसिका विश्वस्थातिविचक्षणा ।
ब्रह्मयोनिर्महायोनिः कर्मयोनिस्त्रयीतनुः ॥ ७७

हाकिनी हारिणी सौम्या रोहिणी रोगनाशनी ।
श्रीप्रदा श्रीःश्रीधरा च श्रीकरा श्रीमती प्रिया ॥ ७८

श्रीमती श्रीकरी श्रेयान् श्रेयसी च सुरेश्वरी ।
कामेश्वरी कामवती कामगिर्यालयस्थिता ॥ ७९

रुद्रात्मिका रुद्रमाता रुद्रगम्या रजस्वला ।
अकारषोडशान्तस्था भैरवी ह्लादिनी परा ॥ ८०

कृपादेहारुणा नाथा सुधाबिन्दुसमन्विता ।
काली कामकला कन्या पार्वती पररूपिणी ॥ ८१

मायावती घोरमुखी नादिनी दीपिनी शिवा ।
मकारामृतचक्रेशी महासेना विमोहिनी ॥ ८२

उत्सुकानुत्सुका हृष्टा ह्रीङ्कारी चक्रनायिका ।
रुद्रा भवानी चामुण्डी ह्रीङ्कारी सौख्यदायिनी ॥ ८३

गरुडा गरुडी कृष्णा सकला ब्रह्मचारिणी ।
कृष्णाङ्गा वाहिनी कृष्णा खेचरी कमला प्रिया ॥ ८४

भद्रिणी रुद्रचामुण्डा ह्रीङ्कारी सौभगा ध्रुवा ।
गोरुडी गारुडी ज्येष्ठा स्वर्गगा ब्रह्मचारिणी ॥ ८५

पानानुरक्ता पानस्था भीमरूपा भयापहा ।
रक्ता चण्डा सुरानन्दा त्रिकोणा पानदर्पिता ॥ ८६

महोत्सुका क्रतुप्रीता कङ्काली कालदर्पिता ।
सर्ववर्णा सुवर्णाभा परामृतमहार्णवा ॥ ८७

योग्याऽर्णवा नागबुद्धिर्वीरपाना नवात्मिका ।
द्वादशान्तसरोजस्था निर्वाणसुखदायिनी ॥ ८८

आदिसत्वा ध्यानसत्वा श्रीकण्ठस्वान्तमोहिनी ।
परा घोरा कराळाक्षी स्वमूर्तिर्मेरुनायिका ॥ ८९

आकाशलिङ्गसम्भूता परामृतरसात्मिका ।
शाङ्करी शाश्वती रुद्रा कपालकुलदीपिका ॥ ९०

विद्यातनुर्मन्त्रतनुश्चण्डा मुण्डा सुदर्पिता ।
वागीश्वरी योगमुद्रा त्रिखण्डी सिद्धमण्डिता ॥ ९१

शृङ्गारपीठनिलया काली मातङ्गकन्यका ।
संवर्तमण्डलान्तस्था भुवनोद्यानवासिनी ॥ ९२

पादुकाक्रमसंतृप्ता भैरवस्थाऽपराजिता ।
निर्वाणसौरभा दुर्गा महिषासुरमर्दिनी ॥ ९३

भ्रमराम्बा शिखरिका ब्रह्मविष्णवीशतर्पिता ।
उन्मत्तहेला रसिका योगिनी योगदर्पिता ॥ ९४

सन्तानाऽऽनन्दिनी बीजचक्रा परमकारुणी ।
खेचरी नायिका योग्या परिवृत्तातिमोहिनी ॥ ९५

शाकम्भरी सम्भवित्री स्कन्दानन्दा मदार्पिता ।
क्षेमङ्करी सुमाश्वासा स्वर्गदा बिन्दुकारुणी ॥ ९६

चर्चिता चर्चितपदा चारुखट्वाङ्गधारिणी ।
अघोरा मन्त्रितपदा भामिनी भवरूपिणी ॥ ९७

उषा सङ्कर्षिणी धात्री चोमा कात्यायनी शिवा ।
सुलभा दुर्लभा शास्त्री महाशास्त्री शिखण्डिनी ॥ ९८

योगलक्ष्मीर्भोगलक्ष्मीः राज्यलक्ष्मीः कपालिनी ।
देवयोनिर्भगवती धन्विनी नादिनीश्वरी ॥ ९९

मन्त्रात्मिका महाधात्री बलिनी केतुरूपिणी ।
सदानन्दा सदाभद्रा फल्गुनी रक्तवर्षिणी ॥ १००

मन्दारमन्दिरा तीव्रा ग्राहिका सर्वभक्षिणी ।
अग्निजिह्वा महाजिह्वा शूलिनी शुद्धिदा परा ॥ १०१

सुवर्णिका कालदूती देवी कालस्वरूपिणी ।
शङ्खिनी नयनी गुर्वी वाराही हुंफडात्मिका ॥ १०२

उग्रात्मिका पद्मवती धूर्जटी चक्रधारिणी ।
देवी तत्पुरुषा शिक्षा साध्वी स्त्रीरूपधारिणी ॥ १०३

दक्षा दाक्षायणी दीक्षा मदना मदनातुरा ।
धिष्ण्या हिरण्या सरणिः धरित्री धररूपिणी ॥ १०४

वसुधा वसुधाच्छाया वसुधामा सुधामयी ।
भृङ्गिणी भीषणा सान्द्री प्रेतस्थाना मतङ्गिनी ॥ १०५

खण्डिनी योगिनी तुष्टिः नादिनी भेदिनी नटी।
खट्वाङ्गिनी कालरात्रिः मेघमाला धरात्मिका॥ १०६

भापीठस्था भवद्रूपा महाश्रीर्धूम्रलोचना।
सावित्री सत्कृतिः कर्त्री चोमा माया महोदया॥ १०७

गन्धर्वी सुगुणाकारा सद्गुणा गणपूजिता।
निर्मला गिरिजा शब्दा शर्वाणी शर्मदायिनी॥ १०८

एकाकिनी सिन्धुकन्या काव्यसूत्रस्वरूपिणी।
अव्यक्तरूपिणी व्यक्ता योगिनी पीठरूपिणी॥ १०९

निर्मदा धामदाऽऽदित्या नित्या सेव्याक्षरात्मिका।
तपिनी तापिनी दीक्षा शोधिनी शिवदायिनी॥ ११०

स्वस्ति स्वस्तिमती बाला कपिला विस्फुलिङ्गिनी।
अर्चिष्मती द्युतिमती कौलिनी कव्यवाहिनी॥ १११

जनाश्रिता विष्णुविद्या मानसी विन्ध्यवासिनी।
विद्याधरी लोकधात्री सर्वा सारस्वरूपिणी॥ ११२

पापघ्नी सर्वतोभद्रा त्रिस्था शक्तित्रयात्मिका।
त्रिकोणनिलया त्रिस्था त्रयीमाता त्रयीपतिः॥ ११३

त्रयीविद्या त्रयीसारा त्रयीरूपा त्रिपुष्करा।
त्रिवर्णा त्रिपुरा त्रिश्रीः त्रिमूर्तिस्त्रिदशेश्वरी॥ ११४

त्रिकोणसंस्था त्रिविधा त्रिस्वरा त्रिपुराम्बिका।
त्रिविधा त्रिदिवेशानी त्रिस्था त्रिपुरदाहिनी॥ ११५

जङ्गिनी स्फोटिनी स्फूर्तिः स्तम्भिनी शोषिणी प्लुता।
ऐङ्काराख्या वासुदेवी खण्डिनी चण्डदण्डिनी॥ ११६

क्लीङ्कारी वत्सला हृष्टा सौःकारी मदहंसिका।
वज्रिणी द्राविणी जैत्री श्रीमती गोमती ध्रुवा॥ ११७

परतेजोमयी संवित्पूर्णपीठनिवासिनी ।
त्रिधात्मा त्रिदशाध्यक्षा त्रिघ्नी त्रिपुरमालिनी ॥ ११८

त्रिपुराश्रीस्त्रिजननी त्रिभूस्त्रैलोक्यसुन्दरी ।
कुमारी कुण्डली धात्री बालभक्तेष्टदायिनी ॥ ११९

कलावती भगवती भक्तिदा भवनाशिनी ।
सौगन्धिनी सरिद्वेणी पद्मरागकिरीटिनी ॥ १२०

तत्वत्रयी तत्वमयी मन्त्रिणी मन्त्ररूपिणी ।
सिद्धा श्रीत्रिपुरावासा बाला त्रिपुरसुन्दरी ॥ १२१

बालात्रिपुरसुन्दर्या मन्त्रनामसहस्रकम् ।
कथितं देवदेवेशि सर्वमङ्गलदायकम् ॥ १२२

सर्वरक्षाकरं देवि सर्वसौभाग्यदायकम् ।
सर्वाश्रयकरं देवि सर्वानन्दकरं वरम् ॥ १२३

सर्वपापक्षयकरं सदा विजयवर्धनम् ।
सर्वदा श्रीकरं देवि सर्वयोगीश्वरीमयम् ॥ १२४

सर्वपीठमयं देवि सर्वानन्दकरं परम् ।
सर्वदौर्भाग्यशमनं सर्वदुःखनिवारणम् ॥ १२५

सर्वाभिचारदोषघ्नं परमन्त्रविनाशनम् ।
परसैन्यस्तम्भकरं शत्रुस्तम्भनकारणम् ॥ १२६

महाचमत्कारकरं महाबुद्धिप्रवर्धनम् ।
महोत्पातप्रशमनं महाज्वरनिवारणम् ॥ १२७

महावश्यकरं देवि महासुखफलप्रदम् ।

इति विष्णुयामळे बालासहस्रनामस्तोत्रम्

---

# ॥ श्रीकामाक्षी-पञ्चशती ॥

(नामसारस्तवः)



कदाचित् कमला नाथं कमलायतलोचनम् ।
पप्रच्छ करुणाराशिं प्रणम्य शिरसा मुहुः ॥ १ ॥

मन्नाथ किं त्वया नित्यं जप्यते दृढभक्तितः ।
तन्मे ब्रूहि मयि प्रीतिर्यद्यस्ति मधुसूदन ॥ २ ॥

इति पृष्टः श्रिया विष्णुरुवाच कमलां हसन् ।
इतः परं प्रवक्ष्यामि रहस्यमपि ते प्रिये ॥ ३ ॥

श्रीकामाक्ष्याः पञ्चशती नाम्नां संकीर्त्यतेऽनिशम् ।
रहस्यातिरहस्यैषा गोपनीया विशेषतः ॥ ४ ॥

दर्शनीया न कस्मैचित् प्रदेयोपासकाय वै ।
कामाक्षीनामकोशेषु सारमादाय शक्तिभिः ॥ ५ ॥

रचितेयं पञ्चशती कामाक्षीप्रीतिसिद्धये ।
तामेव कथयाम्यद्य नामसारोद्भवां प्रिये ॥ ६ ॥

एतद्रहस्यं परमं कामाक्षीप्रीतिदायकम् ।
भोगमोक्षप्रदं नृणां साम्राज्यादिफलप्रदम् ॥ ७ ॥

सहस्रनाम त्रिशती श्रीमत्पञ्चशती तथा ।
त्रयमेतन्महाराज्ञ्या नेत्रत्रयमितीर्यते ॥ ८ ॥

सर्वेषु ललितास्तोत्रकोशपाठेषु यत्फलम् ।
तस्माच्छतगुणं पुण्यं प्राप्नोत्यस्याः प्रकीर्तनात् ॥ ९ ॥

पद्मासनं समाबध्य वीरासनमथापि वा ।
नासाग्रन्यस्तनयनो मनः पञ्चेन्द्रियैः सह ॥ १० ॥

स्ववशीकृत्य मतिमान्बहिर्व्यापारमस्मरन् ।
देवतां पुरतो ध्यात्वा यथाविभवमञ्जसा ॥ ११ ॥

ततो जपेत्समाधिस्थो मन्त्राः सिद्ध्यन्ति मन्त्रिणः ।
अथवा मनसि ध्यात्वा सहस्रदलपङ्कजम् ॥ १२ ॥

तन्मध्ये कर्णिकां ध्यात्वा क्रोशमात्रं सुविस्तृतम् ।
सिंहासनं च तन्मध्ये नवरत्नविचित्रितम् ॥ १३ ॥

तस्योपरि च कामाक्षीं चिन्तयेत्कोमलाकृतिम् ।
पूर्वस्मादधिकं ह्येतद् ध्यानमाभ्यन्तरं प्रिये ॥ १४ ॥

मुनीन्द्रैरपि संसेव्यं भोगमोक्षैकमाधनम् ।
गुह्याद्गुह्यं तव स्नेहाद्वच्मि ध्यानं मम प्रिये ॥ १५ ॥

योगिनामप्यलभ्यं तन्मातुस्तुष्टिकरं क्षणात् ।
यत्र कुत्र स्थितो वापि श्रीविद्यामन्त्रविन्नरः ॥ १६ ॥

हृदये रत्नवसुधां सुधासागरसंवृताम् ।
कल्पोद्यानकदम्बद्रुहेमाम्भोरुहशोभिताम् ॥ १७ ॥

ध्यात्वा तत्रैव सदनं चिन्तामणिविराजितम् ।
तस्मिन् चिन्तामणिगृहे सिंहासनवरे स्थिताम् ॥ १८ ॥

कामाक्षीमात्मनि ध्यायेत् सा सोहमिति निश्चलः ।
एवं यः कुरुते ध्यानं पश्यन्नात्मानमात्मना ॥ १९ ॥

तस्यैव पुरतः सापि सान्निध्यं कुरुते क्षणात् ।
आत्मानं तन्मयं ध्यात्वा यस्तु विद्यां जपेन्नरः ॥ २० ॥

विद्या तस्य विशालाक्षि तत्क्षणादेव सिद्ध्यति ।
तस्मात्तथैव कामाक्षीं ध्यात्वा पश्चादिमां स्तुतिम् ॥ २१ ॥

जपेदखिलपापौघशान्तये शान्तमानसः ।
नामानि तानि वक्ष्यामि शृणु सुन्दरि भक्तितः ॥ २२ ॥

अचिन्तयन् वयोलिङ्गवर्णभेदमतन्द्रितः ।
यानि जप्त्वा महामोहान्मुक्तः सायुज्यमाप्नुयात् ॥ २३ ॥

अथ अस्य श्रीकामाक्षी-पञ्चशतीस्तोत्र-महामन्त्रस्य मन्त्रिण्यादिशक्तयः ऋषयः, अनुष्टुप् छन्दः, श्रीकामाक्षी देवता, ओं (ऐं) वाग्भवकूटेन बीजं, श्रीकामाक्ष्यै (क्लीं) मध्यकूटेन शक्तिः, नमः (सौः) शक्तिकूटेन कीलकं, मम श्रीकामाक्षीप्रसादसिद्ध्यर्थे नामपारायणे जपे विनियोगः ॥

ओं कां अङ्गुष्ठाभ्यां नमः, ओं कीं तर्जनीभ्यां नमः, ओं कूं मध्यमाभ्यां नमः, ओं कैम् अनामिकाभ्यां नमः, ओं कौं कनिष्ठिकाभ्यां नमः, ओं कः करतल करपृष्ठाभ्यां नमः । ओं कां हृदयाय नमः । ओं कीं शिरसे स्वाहा । ओं कूं शिखायै वषट् । ओं कैं कवचाय हुम् । ओं कौं नैत्रत्रयाय वौषट् । ओं कः अस्त्राय फट् । ॐ भूर्भुवस्सुवरोम् इति दिग्बन्धः ॥

ध्यानम् -

कामाक्षीं कारणपरचिद्रूपां करुणात्मिकाम् ।
काञ्चीक्षेत्रगतां चन्द्रकलालंकृतशेखराम् ॥

कल्हारोल्लासिचिकुरां कर्णान्तायतलोचनाम् ।
मन्दस्मेराञ्चितमुखीं तपनोडुपकुण्डलाम् ॥

कम्बुकण्ठीं घनकुचां मुक्तामालाशतावृताम् ।
लम्बवामकराम्भोजां दक्षहस्तलसच्छुकाम् ॥

अदृश्यमध्यामरुणचेलामब्जपदोज्ज्वलाम् ।
सचामररमावाणीसेवितां श्रितवत्सलाम् ॥

सुवर्णतनुमेकाम्रनायकोत्संगवासिनीम् ।
ध्यायामि वरदां देवीं सदानन्दस्वरूपिणीम् ॥

मानसिकपञ्चोपचारपूजा—

ॐ लं पृथिव्यात्मिकायै श्रीकामाक्ष्यै गन्धं कल्पयामि ।
ॐ हं आकाशात्मिकायै श्रीकामाक्ष्यै पुष्पाणि कल्पयामि ।
ॐ यं वाय्वात्मिकायै श्रीकामाक्ष्यै धूपं कल्पयामि ।
ॐ रं अनलात्मिकायै श्रीकामाक्ष्यै दीपं कल्पयामि ।
ॐ वं अमृतात्मिकायै श्रीकामाक्ष्यै अमृतनिवेदनं कल्पयामि ।
ॐसं सर्वात्मिकायै श्रीकामाक्ष्यै सर्वानुपचारान् कल्पयामि ॥

कामाक्षी करुणामूर्तिः कल्याणगिरिमन्दिरा ।
चिदग्निजाता चिद्रूपा श्रितसंरक्षणोद्यता ॥ १ ॥

बालार्ककोटिरुचिरवपुस्सन्नद्धयौवना ।
आघृष्टपद्मरागाश्मनिष्पन्नमकुटोज्ज्वला ॥ २ ॥

स्फुरच्चन्द्रकलाक्लृप्तचूडापीडविराजिता ।
सीमन्तरेखारचितसिन्दूरश्रेणिमञ्जुला ॥ ३ ॥

स्फुरत्कस्तूरितिलककन्दलन्नीलकुन्तला ।
कदम्बमञ्जरिलसत्कर्णपूरमनोहरा ॥ ४ ॥

भ्रूवल्लीस्मरकोदण्डसायकीभूतलोचना ।
मार्ताण्डमण्डलाकाररत्नकुण्डलमण्डिता ॥ ५ ॥

विशङ्कटारालकेशकर्णिकाकोशनासिका ।
लसन्मुक्तामणिभ्राजन्नासाभरणभासुरा ॥ ६ ॥

कस्तूरीकृतमकरिकादिराजत्कपोलभूः ।
लाक्षालक्ष्मीनिर्व्यपेक्षपाटलोष्ठपुटाञ्चिता ॥ ७ ॥

कुन्दकोरकसश्रीकदन्तपङ्क्तिविराजिता ।
अतर्क्यौपम्यचुबुका मुग्धस्मेरमुखाम्बुजा ॥ ८ ॥

नितम्बलम्बमानत्रिवेणीचूलात्तछालिका ।
शिरीषकोमलभुजविभ्राजत्कनकाङ्गदा ॥ ९ ॥

लम्बवामकराम्भोजा दक्षहस्तलसच्छुका ।
नानामणीगणलसत्सुवर्णकृतकङ्कणा ॥ १० ॥

पाशाङ्कुशधनुर्बाणलसत्पाणितलोज्ज्वला ।
रत्नाङ्गुलीयसंदोहरमणीयकराङ्गुलिः ॥ ११ ॥

लोलचिन्ताकपदकमुक्तावलिलसद्गला ।
गन्धकस्तूरिकर्पूरकुङ्कुमालंकृतस्तना ॥ १२ ॥

स्तनभूधरसन्नद्धसोपानत्रिवलीयुता ।
नवीनरोमलतिकाजितकादम्बिनीद्युतिः ॥ १३ ॥

अर्धोरुकग्रन्थिलसद्रत्नकाञ्चीगुणान्विता ।
सौन्दर्यपूरविलसदावर्तायितनाभिका ॥ १४ ॥

जपाकुसुमसच्छायपट्टांशुकपरीवृता ।
जघनाभोगसुभगपृथुश्रोणीभरालसा ॥ १५ ॥

एकाम्रनायकोत्सङ्गकाम्योरुमहिमोच्छ्रया ।
करीन्द्रकुम्भकठिनजानुद्वयविराजिता ॥ १६ ॥

स्मरकाण्डीरतूणीरसंप्रदायकजङ्घिका ।
स्फुरन्माणिक्यमञ्जीररञ्जिताङ्घ्रिसरोरुहा ॥ १७ ॥

कमठीकर्परतटीकठोरप्रपदान्विता ।
यावकश्रीनिर्व्यपेक्षपादलौहित्यवाहिनी ॥ १८ ॥

हरीन्द्रमुखकोटीरतटीघटितपादुका ।
सौन्दर्यलहरीसीमसर्वावयवपाटला ॥ १९ ॥

मरालीलालितगतिः रामणीयकशेवधिः ।
सर्वशृङ्गारवेषाढ्या सर्वावगुणवर्जिता ॥ २० ॥

मोहिताशेषजगती मोहिनीरूपधारिणी ।
महामायी पराशक्तिर्मदिरारुणलोचना ॥ २१ ॥

संपत्करीमहासेनासमृद्धा संपदुन्नता ।
अनेककोटिदैत्येन्द्रगर्वनिर्वापणोल्बणा ॥ २२ ॥

चक्रराजरथारूढचक्रिणीचक्रनायिका ।
मन्त्रिणीसेवितपदा मन्त्रतन्त्राधिदेवता ॥ २३ ॥

अश्वारूढासमाराध्या विश्वातीता विरागिणी ।
बालासमेता त्रिपुरा कालातीता कलावती ॥ २४ ॥

दण्डनाथसमासेव्या भण्डासुरवधोद्यता ।
कामराजप्रिया कामसंजीवनमहौषधिः ॥ २५ ॥

ब्रह्मादिदैवताराध्या ब्रह्मविद्या बृहत्तनूः ।
चापिनी चन्दनालिप्ता चन्द्रविद्या पराङ्कुशा ॥ २६ ॥

मनुविद्या महाराज्ञी महाविद्या महीयसी ।
सिंहासनेशी सिन्दूररुचिः सूर्याभिवन्दिता ॥ २७ ॥

सुन्दरी सुदती सुभ्रूर्वन्दारुजनवत्सला ।
समानाधिकशून्यार्घ्या सकलार्थप्रदायिनी ॥ २८ ॥

सम्राज्ञी सान्द्रकरुणा सनकादिमुनिस्तुता ।
महादेवी महेशानी महेश्वरपतिव्रता ॥ २९ ॥

लोपामुद्रागस्त्यनुता लोभघ्नी लोभवर्जिता ।
पावनी पशुपाशघ्नी पश्यन्ती परमेश्वरी ॥ ३० ॥

कदम्बकलिकोत्तंसा कामेशी कामपूजिता ।
नन्दिविद्याऽऽनन्दमयी नीलस्निग्धाब्जलोचना ॥ ३१ ॥

कल्याणी कामरहिता कामदा कामकोटिका ।
चराचरजगद्धात्री चन्द्रिका चन्द्रवर्तिनी ॥ ३२ ॥

शिरीषसुकुमाराङ्गी शितिकण्ठप्रिया शिवा ।
अनङ्गवल्लभाऽनङ्गशास्त्रसिद्धान्तमञ्जरी ॥ ३३ ॥

कुबेरविद्या कुलजा कुरुकुल्ला कुलेश्वरी ।
कुलाङ्गना त्रिकूटस्था कुरङ्गाङ्ककलाधरा ॥ ३४ ॥

दुर्वासःपूजिता दुःखहन्त्री दुर्मतिदूरगा ।
आम्नायनाथा नाथेशी सर्वाम्नायनिवासिनी ॥ ३५ ॥

सर्वारुणा संगहीना सावित्री सर्वतोमुखी ।
ब्रह्मगीता ब्रह्ममयी ब्रह्मानन्दरसात्मिका ॥ ३६ ॥

निरामया निरानन्दा निर्द्वन्द्वा निरहंकृतिः ।
निगमादृष्टचरणा निराधारा निरीश्वरी ॥ ३७ ॥

नियन्त्री नियतिर्नित्या निराशा निरपायिनी ।
अखण्डानन्दभरिता खण्डत्रयपरिष्कृता ॥ ३८ ॥

काञ्चीक्षेत्रगता कामपीठस्था कामपूजिता ।
महाश्मशाननिलया गायत्रीमण्टपेश्वरी ॥ ३९ ॥

कैलासनाथदयिता कम्पातीरविहारिणी ।
अविच्छिन्नानन्दमूर्तिरप्रमेयापराजिता ॥ ४० ॥

अगम्या गगनाकारा प्रकृतिप्रत्ययात्मिका ।
अवेद्या वेद्यविज्ञात्री पञ्चकृत्यपरायणा ॥ ४१ ॥

सृष्टिस्थितिक्षयतिरोधानानुग्रहकारिणी ।
ब्रह्मगोविन्दादिपञ्चप्रेतमञ्चाधिवासिनी ॥ ४२ ॥

तमोऽतीता तमोहन्त्री तत्वातत्त्वविवेचिनी ।
सर्वतत्त्वमयी सर्वभूतिदा समयप्रिया ॥ ४३ ॥

जिताखिलेन्द्रियग्राममानसाम्बुजहंसिका ।
सुरासुरगणाराध्या सदसद्रूपिणी सती ॥ ४४ ॥

चण्डिका चारुवदना खण्डितारातिमण्डला ।
अगस्त्यविद्यासंसेव्या नन्दिताशेषविष्टपा ॥ ४५ ॥

संवित्सत्यमयी सौम्या दुर्निरीक्ष्या दुरत्यया ।
त्रिकालस्था त्रिकोणस्था त्रिमूर्तिस्त्रिगुणास्पदा ॥ ४६ ॥

यज्ञरूपा यज्ञभोक्त्री कार्याकार्यविचक्षणा ।
नामरूपादिरहिता वामदक्षाध्वपूजिता ॥ ४७ ॥

विश्वेश्वरी विश्ववन्द्या विद्येशी वेदरूपिणी ।
आदिमध्यान्तरहिता सर्वशक्तिस्वरूपिणी ॥ ४८ ॥

अतर्क्यमूर्तिरजिता प्रधानाऽतर्क्यवैभवा ।
चिदूर्मिमाला संचिन्त्या चिन्तितार्थप्रदायिनी ॥ ४९ ॥

चिन्तामणिगृहान्तस्स्था चित्रकर्मा चिरन्तनी ।
मोहहन्त्री मोक्षदात्री मुग्धचन्द्रावतंसिनी ॥ ५० ॥

मुद्रेशीन्यस्तराज्यश्रीर्मृदुमुग्धस्मितानना।
क्रोडीकृताशेषघृणा कोमलाङ्गी कुटुम्बिनी॥ ५१॥

षडङ्गदेवतासेव्या षडाननमस्कृता।
शिवाराध्या शिवमयी शिवमाया शिवाङ्गगा॥ ५२॥

षडूर्मिहन्त्री तरुणी वन्द्या षट्चक्रनायिका।
माधवी माधवाराध्या माधवीकुसुमप्रिया॥ ५३॥

ब्रह्मविष्ण्वादिजननी बृहती ब्रह्मवादिनी।
संगीतरसिका रामा वीणागानविनोदिनी॥ ५४॥

ज्योतिर्मयी जगद्वन्द्या जयिनीजयदायिनी।
भक्तिनम्रजनाधीना भक्तानुग्रहकारिणी॥ ५५॥

जामदग्न्यार्चिता धौम्यपूजिता मूकसंनुता।
भक्तिगेया भक्तिगता भक्तक्लेशविनाशिनी॥ ५६॥

भुक्तिमुक्तिकरी सिद्धविद्या सिद्धगणार्चिता।
रागद्वेषादिरहिता रागिणी रागवर्धनी॥ ५७॥

साम्राज्यदाननिरता रतिः सुरतलम्पटा।
राजराजेश्वरी धीरा नासीरमुखभासुरा॥ ५८॥

क्षेत्रेश्वरी क्षेत्ररूपा क्षेत्रज्ञा क्षयवर्जिता।
क्षराक्षरमयी रक्षा दक्षिणामूर्तिरूपिणी॥ ५९॥

मदिरास्वादरसिका मतङ्गकुलनायिफा।
मन्दारकुसुमापीडा मातङ्गी मदहारिणी॥ ६०॥

कल्पान्तसाक्षिणी कामा कल्पनाकल्पनक्षमा।
संकल्पनिर्मिताशेषभुवना भुवनेश्वरी॥ ६१॥

भव्या भवार्णवतरिर्भावारूढा भयापहा ।
रहस्ययोगिनीपूज्या रहोगम्या रमार्चिता ॥ ६२ ॥

अन्तर्वदनसंदृश्या संततध्यानदीपिता ।
कन्दलत्प्रीतिहृदया कमला कर्मसाक्षिणी ॥ ६३ ॥

कान्तार्धदेहा दीप्यन्ती कान्तिधूतजपाछविः ।
हृदयाकाशतरणिर् ह्रींकारी हृष्टमानसा ॥ ६४ ॥

ह्रीमती हृदयाकाशज्योत्स्ना हार्दतमोपहा ।
परापररहस्याख्यसर्वानन्दमयेश्वरी ॥ ६५ ॥

सर्वसिद्धिप्रदारूढातिरहस्याधिदेवता ।
रहस्ययोगिनीक्षेत्रसर्वरोगहराधिपा ॥ ६६ ॥

निगर्भयोगिन्यावाससर्वरक्षाकरेश्वरी ।
सर्वार्थसाधकभ्राजत्कुलोत्तीर्णाभिवन्दिता ॥ ६७ ॥

सौभाग्यसत्संप्रदाययोगिनीपरिपूजिता ।
क्षोभणोद्यद्गुप्ततरयोगिनीगणसेविता ॥ ६८ ॥

आशापरीपूरकात्तगुप्तयोगिन्यभिष्टुता ।
त्रैलोक्यमोहनस्थप्रकटयोगिन्युपासिता ॥ ६९ ॥

कलातिथिनिधीष्विन्दुवर्णमन्त्रस्वरूपिणी ।
गुणरेखाग्निवृत्तान्तर्नृपनागदलालया ॥ ७० ॥

मुनिदिक्पङ्क्तिवसुभूकोणान्तर्बिन्दुवासिनी ।
वेदर्तुदिक्सूर्यकलादस्रपत्राब्जचक्रगा ॥ ७१ ॥

मृणालतन्तुसदृशी सुषमावासिनी वसुः ।
सदाराध्या सदाध्येया सत्संगतिरनुत्तमा ॥ ७२ ॥

पीयूषरससंस्रावसंतर्पितजगत्त्रयी ।
संततिस्सन्ततिच्छेदहारिणी धारणा धरा ॥ ७३ ॥

स्वाहाकारा हविर्भोक्त्री यजमानाकृतिः कृतिः ।
पितृप्रसू प्रसूः पद्मा स्वयंभूरात्मभूरभूः ॥ ७४ ॥

त्र्यक्षरी त्रिगुणातीता क्लींकारी क्लमहारिणी ।
प्रसादरूपा पदवी पराप्रासादरूपिणी ॥ ७५ ॥

शर्वाणी शर्मदा धात्री धर्मरूपा परागतिः ।
मुञ्जकेशी मुक्तसंगा पञ्चयज्ञपराकृतिः ॥ ७६ ॥

षट्त्र्येककर्मनिरतजनरक्षणदीक्षिता ।
स्वीकृतानुग्रहकला दूरस्थापितनिग्रहा ॥ ७७ ॥

निरन्तरसुखा गौरी नीपारण्यनिवासिनी ।
मोक्षदेशानमहिषी लक्ष्यालक्ष्यस्वरूपिणी ॥ ७८ ॥

राजसी कमलावासा ब्राह्मी सृष्टिविधायिनी ।
सत्वाढ्या वैष्णवी पात्री तामसी रुद्ररूपिणी ॥ ७९ ॥

हन्त्रीश्वरी तिरोधानकारिणी बहुरूपिणी ।
सदाशिवानुग्रहदा सदाशिवमयी मतिः ॥ ८० ॥

अखण्डैकरसानन्दतनुः पीयूषरूपिणी ।
ऐंकारस्यन्दितत्वाख्य विश्वेन्द्रियफलप्रदा ॥ ८१ ॥

आनन्दाज्याहुतिप्रीता भक्तिज्ञानप्रदायिनी ।
त्रिमुद्रिणी भगाराध्या परनिर्वाणरूपिणी ॥ ८२ ॥

सर्वभूतहिता वाणी ब्रह्मरन्ध्रनिवासिनी ।
तटित्कोटिसमच्छाया सर्वविद्यास्वरूपिणी ॥ ८३ ॥

महापद्माटवीसंस्था कारणानन्दविग्रहा ।
सिद्धलक्ष्मीर्महालक्ष्मीः राज्यलक्ष्मीः पराङ्कुशा ॥ ८४ ॥

छन्दोमयी चतुष्षष्टिकलाकाव्यार्थदर्शिनी ।
ऐंकारिणी कालरूपाऽणिमादिकफलप्रदा ॥ ८५ ॥

महोरूपा महायोगिन्यमला भूतिदा कला ।
कूटत्रयमयी मूलमन्त्ररूपा मनोन्मनी ॥ ८६ ॥

बन्धकासुरसंहर्त्री कन्यकारूपधारिणी ।
महाबिलगुहालीना महामुनिमनोनटी ॥ ८७ ॥

शृङ्गारमूर्तिः सम्राज्ञी शृङ्गाररसनायिका ।
भद्राकृतिः कान्तिमती भद्रदा भक्तवत्सला ॥ ८८ ॥

महाबला महानन्दा महाभैरवमोहिनी ।
सौभाग्यदायिनी स्वामिन्युदग्रा संप्रदायिनी ॥ ८९ ॥

गोमती गुह्यनिलया गुह्यमूर्तिर्गुणास्पदा ।
विवेकदायिनी शिष्टा शिष्टचेतोनिवासिनी ॥ ९० ॥

कात्यायनी कामकोटिरन्नपूर्णाऽभयंकरी ।
शाकिनी शांभवी भद्रा भैरवी भारतीमयी ॥ ९१ ॥

अभ्याससाध्या जयदा विजया भगमालिनी ।
रुक्मिणी रुक्मसच्छायरोचनातिलकोज्ज्वला ॥ ९२ ॥

वेदान्तमृग्यचरणा जरामृत्युभयापहा ।
कान्तिः कामकला कान्ता विधुमण्डलवासिनी ॥ ९३ ॥

शम्भुलोचनपीयूषवर्तिरार्तिनिवारिणी ।
विघ्नकादम्बिनीवात्या सर्वप्राणिमयी स्मृतिः ॥ ९४ ॥

लोकहन्त्री लोकभर्त्री भोगकर्त्री परात्परा।
वीरप्रिया वीतरागा नाशिताशेषवैकृतिः ॥ ९५ ॥

नमज्जनाह्लादकरी नादब्रह्मस्वरूपिणी।
विप्राधीना विप्ररूपा विप्रजिह्वाविहारिणी ॥ ९६ ॥

विप्राराध्या विप्रगणपूजातुष्टा वियन्मयी।
अव्याहताज्ञा जननी जयिनी प्रणवात्मिका ॥ ९७ ॥

कामरूपा कलालापा भार्गवी जगदीश्वरी।
विमानस्था मानवती नित्यतृप्तजनप्रिया ॥ ९८ ॥

परा विभूतिः सर्वज्ञानादिबोधा दयानिधिः।
अनन्तशक्तिरचला प्रणतप्रियबान्धवा ॥ ९९ ॥

अनादिरखिलाधारा सच्चिदानन्दरूपिणी।
सर्वोपनिषदुद्घुष्टवैभवा सर्वमङ्गला ॥ १०० ॥

इति ते कथितं स्तोत्रं नामसारात्मकं मया।
सर्वसौभाग्यदं देवि सर्वैश्वर्यप्रदायकम् ॥ १०१ ॥

आयुष्करं पुष्टिकरं तुष्टिदं पुरुषार्थदम्।
साहित्यवैशद्यकरं विशेषाद्दिष्टदं नृणाम् ॥ १०२ ॥

विद्याप्रदं पुत्रकरं सर्वसंपत्प्रदायकम्।
य इदं प्रपठेद्विद्वांस्त्रिवारं प्रतिवासरम् ॥ १०३ ॥

गङ्गायां च कुरुक्षेत्रे तथान्यासु नदीषु च।
उपरागे पुष्पवतोर्द्विमुखीशतदानतः ॥ १०४ ॥

पृथक्फलं यद्धर्मस्य स तत्फलमवाप्नुयात्।
ब्रह्महत्यादिपापानि नश्यन्त्यस्य जपात्प्रिये ॥ १०५ ॥

स्तवोऽप्यन्यश्च नास्त्येव नामपञ्चशतीसमः ।
तस्मात्त्वमपि पद्माक्षि स्तवेनानेन नित्यशः ॥ १०६ ॥

कामाक्षीं परमेशानीं स्तुहि श्रद्धासमन्विता ।
स्तुता त्वया महेशानी महाशक्तिः परात्परा ॥ १०७ ॥

शृङ्गारनायिका लक्ष्मीः करुणारूपिणी शिवा ।
श्रीमाता देविकामाक्षी तवाभीष्टानि दास्यति ॥ १०८ ॥

इति चतुर्लक्षग्रन्थविस्तारे श्रीसौभाग्यलक्ष्मीकल्पे मोक्षपादे श्रीकमलाकमलाक्षसंवादे नामसारस्तवाख्यं
श्रीकामाक्षीपञ्चशतीस्तोत्रम्

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥

कञ्चन काञ्चीनिलयं करधृतकोदण्डबाण सृणिपाशम् ।
कठिनस्तनभरनम्रं कैवल्यानन्द कन्दमवलम्बे ॥

ऐश्वर्यमिन्दुमौलेः ऐकात्म्य प्रकृति काञ्चिमध्यगतम् ।
ऐन्दवकिशोरशेखरं ऐदम्पर्यं चकास्ति निगमानाम् ॥

कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥

लीये पुरहरजाये माये तव तरुणपल्लवच्छाये ।
चरणे चन्द्राभरणे काञ्चीशरणे नतार्तिसंहरणे ॥

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जयचिद्गगनकौमुदीधारे ॥

